# अस्माकं महान् देशः

# सनातनी संस्कृतिः च ।

वयं भिन्नाः चेदपि अभिन्नाः !

अस्माकं भाषाः विभिन्नाः, किन्तु प्रतिपाद्यः विषयः समानः । अस्मदीयाः आचारव्यवहाराः भिन्नाः, किन्तु तत्वं अभिन्नम् । अस्मिन् देशे बह्व्यः जातयः, बहूनि मतानि । किन्तु सर्वेषां संस्कृतिः एका एव । एतदेव भारतीयसंस्कृतेः वैशिष्ट्यम् ।

काश्मीरतः कन्याकुमारीपर्यन्तं या एकतारूप-लता वर्धिता दृश्यते, तां वैदिकाः ऋषिमुनयः आरोपितवन्तः । रामकृष्णादीनाम् अवताराः एताम् एकतां दृढमूलां कृतवन्तः । बुद्धमहावीरादिभिः एषा एकता सिक्ता च । आदिशङ्कराचार्यः चतसृषु दिक्षु चतुराम्नायपीठानि स्थापयन् एताम् एकतां पोषितवान् । गुरुनानकः, गौराङ्गमहाप्रभुः, रामकृष्णपरमहंसः, विवेकानन्दः, स्वामी दयानन्दः, ज्ञानेश्वरः, नामदेवः, इत्यादयः लोके दृढीकृतवन्तः यत् ''अस्माकं महत्वं सांस्कृतिकैकतायां राष्ट्रियैकतायां च अस्ति'' इति ।

समपार्श्वपट्टके (प्रिज़्म्) पतिताः सूर्यकिरणाः विभिन्नवर्णेषु प्रकटीभवन्तः तापशक्तिहीनाः भवन्ति । ते एव किरणाः सूर्यमुखिदर्पणे प्रतिफलिताः, विशिष्टां शक्तिं सम्पाद्य ज़्वालाम् उत्पादयितुं समर्थाः भवन्ति ।

वृष्टेः एकः बिन्दुः धूलिकणम् अपि अपसारयितुं न शक्नोति । किन्तु एतादृशैः कणैः निर्मितः प्रवाहः पर्वतम् अपि उल्लङ्घ्य गच्छति ।

आगच्छन्तु, भ्रातरः ! वयं सर्वे सङ्घटिताः सन्तः राष्ट्रियाम् एकतां परिपोषयामः, या च एकता अनादिकालतः प्रवहन्ती आगता, यस्याश्च विषये वयम् अभिमानं वहामः ।



# चन्दमामा

अक्टोबर– १९८४

*

## अ न्त र ङ्ग म्



*


प्रतिकृतिमूल्यम् रू. २-००

वार्षिकं ग्राहकशुल्कम् रू. २४-००

# चन्दमामा

संस्थापकः 'चक्रपाणिः'

सञ्चालकः 'नागिरेड्डी'

कश्चित् संस्कृतेन सदोषं वदति चेत् वयं किं कुर्मः ? तत्क्षणे एव दोषं प्रदर्शयामः । केचन उपहासम् अपि कुर्वन्ति । अस्मिन् सन्दर्भे वस्तुतः वक्तुः मनस्थितिः कथं वा स्यात् ? प्रायः अत्र वक्ता धैर्यच्युतः भविष्यति । कालान्तरे सम्भाषणप्रवृत्तिम् एव त्यजेत् सः । अतः पदे पदे दोषप्रदर्शनं न करणीयम् ।

एवं तु कर्तुं शक्यते— अन्यस्य सम्भाषणं जागरूकतया परिशीलनीयम् । अन्येन कृताः दोषाः स्वसम्भाषणे यथा न भवेयुः तथा जागरूकता समाश्रयणीया । सम्भाषणपरम्परायाः उज्जीवने सर्वे संस्कृतज्ञाः सश्रद्धाः भवेयुः ।

सम्पुटः– १ अक्टोबर- ८४ सञ्चिका– ७

प्रतिकृतिमूल्यम् रू. २- * वार्षिकं ग्राहकशुल्कम् रू.२४-



## चन्दमामा प्रजल्पति



### पशुपक्षिणां पालनं-स्वास्थ्यवर्धनम् ।

शुनक-मार्जार-कपोतादीनां पालनेन आनन्दः उपलभ्यते इति तु सत्यम् । किन्तु हृदयरोगाः रक्तसम्बन्धिरोगाः च निवारिताः भविष्यन्ति इति तु आश्चर्यम् ।

स्विडनदेशे गोथेन बर्ग प्रदेशे प्रवृत्ते पशुपक्षि-शास्त्रज्ञानां सम्मेलने कश्चित् शोधकः प्रतिपादितवान् यत्- 'पशुपक्षिणां पालनेन मानवानां स्वास्थ्यं वर्धते' इति ।

### पशुपक्षिणः भूकम्पं सूचयन्ति ।

भारतस्य भूकम्पविज्ञाननिर्देशकः श्री. एच्. एन्.- श्रीवास्तवः कथयति– 'पशूनाम् आचरणस्य परिशीलनेन भूकम्पः पूर्वम् एव ज्ञातुं शक्यते' इति ।

अत्र उदाहरणम्– जापानदेशे नागोया नगरे उपाहारगृहेषु प्रतिदिनं मूषकाः बहवः दृश्यते स्म । किन्तु १८ ११ तमे वर्षे प्रवृत्तस्य भूकम्पस्य पूर्वदिने सायङ्काले एते मूषकाः सर्वे अदृश्यतां गताः आसन् ।




चीनादेशे तियेनसिन् प्रदेशे भूकम्पः यदा प्रवृत्तः, ततः पूर्वं अजाः अश्वाः च इतस्ततः धावन्ति स्म । व्याघ्राः विनाकारणं घुर्गुरायन्ते स्म । कुक्कुटाः स्वनीडं न प्रविष्टवन्तः च । युगोस्लावियादेशे १९५५तमे वत्सरे भूकम्पतः पूर्वं प्राणिसङ्ग्रहालयस्य पक्षिणः प्राणिनः च कोलाहलं कृतवन्तः ।

### भवन्तः जानन्ति वा ?

१. ५०तमे क्रिस्ताब्दे क्रिस्तमतप्रचारार्थं भारतं प्रथमं कः आगतवान् ?

२. कः धर्मः २४ तीर्थङ्करान् स्वधार्मिकगुरून् मानयति ?

३. बिहारप्रान्ते क्रि.श. ४२५ तः १२०५ पर्यन्तं प्रसिद्धः विश्वविद्यालयः कः आसीत् ?

४. पारसीकानां पवित्रग्रन्थस्य नाम किम् ?

५. क्रि.पू. प्रथमसंवत्सरे रोमदेशे एकः वाग्मी प्रसिद्धः आसीत् । तस्य नाम किम् ?

(उत्तराणि ६४तमे पृष्ठे)



# यथा राजा तथा प्रजाः

जयनगर-राज्यस्य राजा वीरभद्रः। कदाचित् तस्य राज्ये अव्यवस्था व्याप्ता। प्रजाः निर्भयं राज्ञः तथा राज्यनियमानाम् विषये अनादरं प्रदर्शयितुम् आरब्धवन्तः। राजा वीरभद्रः राज्ये सुव्यवस्थां स्थापयितुं बहुधा प्रयत्नं कृतवान्। "अव्यवस्थायाः कारणं किं स्यात्?" इति ज्ञातुम् अपि प्रयत्नं कृतवान्। किन्तु राजा असफलः एव।

पार्श्वराज्ये प्रतापनगरे समीचीना राज्यव्यवस्था प्रचलति स्म। तस्मिन् राज्ये जनाः अपि सुखिनः आसन्। राज्ञः शासननियमानां च विषये प्रजानां मनस्सु सुतराम् आदरभावः आसीत्। अतः वीरभद्रराजः चिन्तितवान्– "अहं स्वयं प्रतापनगरराज्यं गमिष्यामि। तत्रत्यां सुव्यवस्थां परिशीलयिष्यामि" इति।

प्रतापनगरस्य राजा धीरसेनः वीरभद्रं हृत्पूर्वकं स्वागतीकृतवान्। वीरभद्रस्य आगमनकारणं ज्ञात्वा तद्विषये स्वकीयम् अभिप्रायम् उक्तवान्– "सर्वस्य अपि राज्यस्य उन्नतिः व्यवस्था च प्रजाः आधारीकृत्य तिष्ठति। यदि मम राज्ये सुखं सुव्यवस्था च अस्ति, तत्र कारणं प्रजाः एव" इति।

एतत् श्रुत्वा वीरभद्रः चिन्तितवान्- "मम राज्ये या अव्यवस्था दृश्यते तत्र कारणम् अहं न, अपि तु मम प्रजाः एव" इति।

"धीरसेनः स्वप्रजानां स्तुतिं कृतवान् किल? अतः ते जनाः द्रष्टव्याः" इति वीरभद्रस्य आशा जाता। सः धीरसेनं स्वविचारं निवेदितवान्। धीरसेनः उक्तवान्– "आवां द्वौ अपि गुप्तरूपेण राज्ये सञ्चारं कुर्वः। सर्वम् अपि परिशीलयावः" इति।

परेद्युः उभौ अपि वेषान्तरं धृत्वा राज्यपरिशीलनार्थं प्रस्थितौ। सर्वत्र तौ भ्रमणं कृतवन्तौ। सर्वत्र धीरसेनस्य आदरपूर्वकं स्वागतं



लब्धम्। "राज्ञि छद्मवेषे स्थितेऽपि, सर्वे धीरसेनस्य परिचयं गृहीतवन्तः एव। सर्वेऽपि स्वराजस्य विषये अनन्यां श्रद्धां प्रदर्शयन्ति स्म। एतत् दृष्ट्वा वीरभद्रस्य अत्याश्चर्यम्। वीरभद्रः एकत्र एतस्य कारणं पृष्टवान्।

"महाराजस्य विषये अस्माकं महती श्रद्धा अस्ति। अतः येन केनापि वेषेण स्थितस्य महाराजस्य परिचयं ग्रहीतुं शक्नुमः वयम्" इति उक्तवान् सः पुरुषः।

सञ्चारसमये राजा धीरसेनः अपेक्षितानि बहूनि वस्तूनि क्रीतवान्। किन्तु कोऽपि वणिक् वस्तूनां मूल्यं न स्वीकृतवान्। वणिजः उक्तवन्तः– "एतानि वस्तूनि वयम् उपायनरूपेण यच्छन्तः स्मः। राजप्रजयोः मध्ये क्रयविक्रयणं न भवेत्" इति।

सञ्चारतः प्रतिनिवृत्तः वीरभद्रः धीरसेनम् उक्तवान्– "भवतः राज्यस्य जनाः वस्तुतः महान्तः। भवतः प्रजाभ्यः मम प्रजाः नीतिशिक्षणं प्राप्नुयुः।"

एतदनन्तरं वीरभद्रः स्वराज्यं प्रतिनिवृत्तः।

एकमासानन्तरं वीरभद्रः वेषान्तरं धृत्वा स्वराज्ये भ्रमणं कर्तुं निर्गतः। किन्तु राज्ये जनाः कुत्रापि स्वमहाराजस्य परिचयं न गृहीतवन्तः।

एकत्र राजा कस्यचित् वणिजः समीपे वस्तुनः मूल्यं पृष्टवान्। 'वणिजा उक्तं मूल्यम् अत्यधिकम्' इति महाराजस्य मनसि भावना आगता। अतः सः वणिजं पृष्टवान्– "महाराजः एव स्वयम् आगत्य एतत् वस्तु भवतः समीपात् क्रीणति चेदपि भवान् एतावदेव मूल्यं वदति वा?"

"राजा एव स्वयम् आगतः चेत् एतत् मूल्यं किम्, इतोऽपि द्विगुणीकृत्य वदामि। यतः सः धनवान् किल?' इति उक्तवान् वणिक्। कथनसमये आत्मनः पुरतः कः अस्ति इत्यपि सः न गणितवान्।

प्रजानाम् एतादृशं व्यवहारं दृष्ट्वा महाराजः बहु खिन्नः। सः राजभवनं प्रत्यागत्य सर्वान् मन्त्रिणः आहूतवान्। तेषां समीपे प्रजानां व्यवहारं विवृण्वन् उक्तवान्-"मम दौर्भाग्यं यत् अहम् एतादृशानां प्रजानां राजा अस्मि। प्रतापनगरे पश्यन्तु। तत्रत्याः प्रजाः सज्जनाः इति

कृत्वा तत्रत्यं सर्वं सुव्यवस्थितं सुखपूर्णं च अस्ति । अस्मदीयाः प्रजाः अपि प्रतापनगरस्य प्रजाभिः तुल्याः भवेयुः । एतत् साधयितुं किं किं कर्तुं शक्यते इति कृपया सूचयन्तु'' इति ।

किञ्चित्कालं यावत् परस्परं सम्भाषणं कृत्वा ते उक्तवन्तः– ''भवान् महाराजः भूत्वा पार्श्वदेशं गतवान् । तत्रत्यां राज्यव्यवस्थां दृष्ट्वा आगतवान् । किन्तु अस्माकं प्रजाः एतद्विषये किमपि न जानन्ति किल ? अस्मदीयाः प्रजाः तद्देशीयाः इव भवेयुः इति यदि भवान् इच्छति, तर्हि केचन प्रजाप्रतिनिधयः अपि भवता तत्र प्रेषणीयाः । अनन्तरं किमपि निर्णयं स्वीकर्तुं शक्यते'' इति ।

वीरभद्रः मन्त्रिणाम् एतां सूचनाम् अङ्गीकृतवान् । सः कुशलतापूर्वकं शतं प्रजाप्रतिनिधीन् चितवान् । प्रतापनगरे सञ्चारं कृत्वा तत्रत्यान् जनान् मुखतः मेलितुं, तथा राज्यव्यवस्थां सुसूक्ष्मं परिशीलयितुं च तान् प्रजाप्रतिनिधीन् प्रेषितवान् । एतदर्थं धीरसेनस्य अनुमतिः अपि तेन प्राप्ता आसीत् ।

मासद्वयानन्तरं ते प्रतिनिधयः सञ्चारं समाप्य आगतवन्तः । स्वकीयम् अनुभवं विवृण्वन्तः ते राजानम् उक्तवन्तः- ''महाराज ! यस्य कस्यापि राज्यस्य सुव्यवस्थायै समुचितविकासार्थं च योग्यः समर्थः च नायकः अपेक्षितः । प्रतापनगरस्य राजा योग्यः समर्थः



च अस्ति'' इति ।

एतत् श्रुत्वा कुपितः वीरभद्रः उक्तवान्- ''राजा धीरसेनः मम समीपे उक्तवान् यत् ''मम राज्यस्य समृद्ध्यै सुव्यवस्थायै च मदीयाः प्रजाः एव कारणम्'' इति । किन्तु भवन्तः कथयन्ति- 'अत्र महाराजस्य योग्यता एव कारणम्' इति । एतत् कथं भवितुम् अर्हति ?'' इति ।

तदा प्रजाप्रतिनिधयः उक्तवन्तः- ''राजा धीरसेनः गुणेन विनम्रः । अतः सः सफलतायाः कीर्तिं स्वयं न स्वीकरोति । सः प्रजाः पुत्रवत् पश्यति । सः प्रजानिमित्तं बहु त्यागं कृतवान् । अतः राज्ये सुव्यवस्थायै प्रजाः एव कारणम् इति उक्त्वा प्रजानां प्रशंसां कृतवान् ।

एषा तु वस्तुस्थितिः'' इति।

किञ्चिदित्र तृप्तः वीरभद्रः सन्देहं प्रकटितवान्- ''प्रतापनगरस्य प्रजाः छद्मवेषेण स्थितम् अपि स्वराजं परिचिन्वन्ति। मम देशे तु प्रजाः पुरतः उपस्थितम् अपि राजानं न परिचिन्वन्ति। अत्र कारणं किम् ?'' इति।

''महाराज! धूलिमध्ये पङ्के वा पतितम् अपि सुवर्णं जनाः जानन्ति, स्वीकुर्वन्ति च। अत्र स्वीकर्तुः वैशिष्ट्यं किमपि नास्ति। वैशिष्ट्यं तु सुवर्णस्य'' इति प्रतिनिधयः उक्तवन्तः।

'प्रजाप्रतिनिधीनां वचनं सत्यम्' इति राजा वीरभद्रः ज्ञातवान्। अतः सः स्वकीयम् अभिप्रायं स्पष्टं प्रकटयितुं तान् प्रार्थितवान्।

''राजा धीरसेनः अहोरात्रं प्रजानां हितम् एव चिन्तयति। स्वप्रजानां समस्याः श्रद्धया शृणोति। ताः परिहरति च। एवं सर्वदा प्रजाहितं चिन्तयतः महाराजस्य सुखं दुःखं च प्रजाः पश्यन्ति एव।

धीरसेनः राजोचितं भोगविलासादिकं त्यक्त्वा प्रजानां हितम् एव स्वजीवनस्य उद्देशं भावयति। स्वकीयं सुखं सौकर्यं च अविगणय्य प्रजानां हितार्थं कार्यं करोति।

महाराजस्य विषये प्रजानां विश्वासः तावन् अस्ति यत् प्रजाः महाराजस्य वचनम् एकाभिप्रायेण अङ्गीकुर्वन्ति। प्रजानां विषये राजा चिन्तयति यत् कार्यसमये निर्बन्धस्य बलप्रदर्शनस्य वा आवश्यकता नास्ति इति। तस्मिन् राज्ये यथा राजा प्रामाणिकः तथा प्रजाः अपि प्रामाणिकाः। यथा राजा तथा प्रजाः'' प्रजाप्रतिनिधयः स्वकीयम् आभिप्रायं स्पष्टं प्रकटितवन्तः।

प्रतिनिधीनां वचनेन महाराजे ज्ञानोदयः जातः। तस्य विवेकः जागरितः।

सः सद्यः एव मन्त्रिणः आहूय तान् आदिष्टवान्- ''यदि राज्ये सुव्यवस्था सुखं च न भवति तर्हि राज्यशासने अस्माकं नैतिकः अधिकारः न भवति'' इति।

एतदनन्तरं अल्पे एव काले विजयनगरस्य अपि जनाः सुखिनः राजभक्ताः च अभवन्।






[परस्परसङ्घट्टनेन नौकाद्वयम् अपि जले निमग्नम्। पिङ्गलः काष्ठफलकस्य साहाय्येन मरुभूमिं प्राप्तवान्। तत्र सः हसनगोरिं मिलितवान्। उभौ अपि अनुचरैः सह मरुभूमि-चोरस्य भैरवनाथस्य अन्वेषणं कुर्वन्तौ इफ्रीदुर्गं प्राप्तवन्तौ]

हसनगोरी अङ्गुलि-सङ्केतपूर्वकम् एकां दिशां प्रदर्शितवान्। पिङ्गलः तस्यां दिशायां स्वदृष्टिं प्रसारितवान्। अल्पे एव काले ते एकस्य प्राचीनदुर्गस्य समीपम् आगतवन्तः।

दुर्गस्य पार्श्वे एकः पर्वतः आसीत्। ततः एका नदी प्रवहति स्म। नद्याः उभयपार्श्वयोः खर्जूरवृक्षाः विलसन्ति स्म। समग्रं वातावरणं शान्तम् आसीत्। दुर्गस्य उपरि द्वारे वा मनुष्याणां चिह्नम् अपि न दृश्यते स्म।

पिङ्गलः हस्तेन दुर्गं प्रदर्शयन् हसनगोरिं पृष्टवान्- "एतत् एव किल भवदुक्तं दुर्गम्?" इति।

"आम् आम्, पश्यतु। दुर्गस्य पार्श्वे पर्वतेषु निलीनः एकः मार्गः दृश्यते किल?। एषः मार्गः टेहरान्–कैरो नगरयोः मध्ये सम्बन्धं कल्पयति। मार्गमध्ये स्थितम् एतत् दुर्गं प्रवासिनां वणिजां कृते च विश्रान्तिस्थानम्। मरुभूमिचोरेभ्यः वणिजः यात्रिकाः च रक्षणीयाः




इति उद्देशेन एतत् दुर्गं निर्मितम्। एतस्य रक्षणार्थं द्विशतं सैनिकाः सदा अत्र निवसन्ति। दुर्गं रक्षन्तः ते वणिजां यात्रिकाणां च भयम् अपि दूरीकुर्वन्ति। किन्तु आश्चर्यस्य विषयः यत् इदानीम् अत्र सर्वत्र मौनं विलसति। दुर्गस्य उपरि समीपे वा एकः अपि सैनिकः न दृश्यते।''

तावति काले ते दुर्गस्य समीपम् आगतवन्तः आसन्।

''प्रायः लुण्टाकनायकः भैरवनाथः दुर्गस्य उपरि आक्रमणं कृत्वा सैनिकानां संहारं कृतवान् स्यात्। दुर्गस्य प्रवेशेन एव वयं वस्तुस्थितिं ज्ञातुं शक्नुमः''इति पिङ्गलः स्वसन्देहं प्रकटितवान्।

''भवतः वचनं सत्यम् एव स्यात्। दुर्गस्य उपरि लुण्टाकपक्षीयः अपि कोऽपि न दृश्यते किल?'' इति वदन् हसनगोरिः स्वस्य उष्ट्रस्य खलीनम् आकृष्टवान्। तथैव दुर्गस्य तत्परिसरस्य च उपरि स्वदृष्टिं प्रसारितवान्।

पिङ्गलः उष्ट्रम् अग्रे चालयन् उक्तवान्–''महोदय! अत्र एव स्थित्वा वस्तुस्थितिं कल्पयितुं न शक्नुमः वयम्। दुर्गस्य द्वारसमीपं गतं चेत् किमपि ऊहितुं शक्येत। यतः शत्रुजनैः सह युद्धं प्रवृत्तं चेत् तत्र किमपि चिह्नादिकम् अवश्यं दृश्यते'' इति।

स्वकीयम् उष्ट्रम् अपि अग्रे चालयन् हसनगोरिः पिङ्गलम् अनुसृतवान्।

''भवतः आशङ्का सत्यम् स्यात्। द्वारसमीपे घोरं युद्धं प्रवृत्तं स्यात् एव। युद्धं विना अस्मदीयाः सैनिकाः शत्रून् अन्तः प्रवेष्टुं न त्यजन्ति। किन्तु एतत् तु निश्चितं यत् लुण्टाकाः शतसङ्ख्यया आगताः भवेयुः।''

पिङ्गलः हसनगोरी च क्रमशः दुर्गस्य द्वारसमीपम् आगतवन्तौ।

तत्र द्वारं पिहितम् आसीत्। ''अन्तः केनापि कीलितं स्यात्'' इति स्पष्टं ज्ञातुं शक्यते स्म। तत्रत्यः परिसरः अतीव शान्तः आसीत्। सहस्रवर्षेभ्यः अत्र जनाः न उषितवन्तः वा? इति संशयः उद्भवति स्म। युद्धस्य मरणस्य वा चिह्नम् लेशमात्रम् अपि अदृष्ट्वा हसनगोरी एकवारं हसितवान्।

अनन्तरं उष्ट्रतः अवतरन् सः उक्तवान्– "पिङ्गल ! भवान् विनाकारणं भीतिं प्रदर्शितवान्। भैरवनाथः बलवान् चतुरः च स्यात् नाम। किन्तु अस्माकं सैनिकैः सह युद्धं कर्तुं तस्य धैर्यं नास्ति। किन्तु अस्मदीयाः सैनिकाः अपि न दृश्यन्ते। अत्र किमपि अन्यकारणं स्यात्।"

एवं वदन् हसनगोरी तृप्त्या मन्दहासं प्रकटितवान्। पिङ्गलः प्रश्नार्थकदृष्ट्या हसनगोरिं दृष्टवान्।

पिङ्गलः अपि उष्ट्रतः अवतीर्णः आसीत्। उभौ अपि मुख्यद्वारस्य समीपम् आगतवन्तौ। हसनः पिङ्गलस्य स्कन्धस्य उपरि हस्तं स्थापयन् उक्तवान्- "पिङ्गलः! मम तु भीतिः, अस्मदीयाः सैनिकाः सुरां पीत्वा मत्ताः सन्तः अन्तः सुप्ताः भवेयुः इति।"

पिङ्गलः एतं विषयं न विश्वसिति। सः सन्देहं प्रकटयन् उक्तवान्- "यदि एतत् सत्यं तर्हि कथं वा भवदीयः पुरुषः मारयित्वा हस्तपादौ बध्द्वा गृध्रणाम् आहारत्वेन समर्पितः स्यात्? यतः सः अपि अस्य एव दुर्गस्य रक्षकभटः आसीत् किल?"

"एतत् अपि सम्भाव्यम् यत् सः सैनिकः पानमत्तः सन् बहिः कस्यापि खर्जूरवृक्षस्य अधः सुप्तवान् स्यात्। तदा भैरवस्य अनुचराः आगत्य तम् आक्रान्तवन्तः भवेयुः।"



हसनस्य एतत् वचनं श्रुत्वा पिङ्गलः किञ्चित्कालं मौनं स्थितवान्। इदमित्थम् इति निर्णयतः पूर्वम् सः परिस्थितिं सम्यक् विवेक्तुं मुख्यद्वारं परिशीलयितुं च इच्छति स्म।

अतः सः किमपि अनुक्त्वा जागरूकतया द्वारसमीपं गतवान्। द्वारम् अन्तः कीलितम् अस्ति इति मत्वा सः सम्पूर्णशक्त्या द्वारं पृष्ठतः नोदितवान्।

धडाम्! धडाम्! धडाम्! महान् विस्फोटः समुद्भूतः!

भीत्या कम्पितः पिङ्गलः पृष्ठतः उत्प्लुतवान्। तस्य मुखतः दीर्घः चीत्कारः बहिः आगतः। विस्फोटकारणतः द्वारं छिन्नविच्छिन्नम् अभवत्। दुर्गस्य कश्चन भागः अपि ध्वस्तः।




केचन स्थले एव मृताः सन्ति । अन्ये केचन भूमौ पतिताः, धावताम् उष्ट्राणाम् पादाघातेन तीव्रतरं व्रणिताः सन्ति । उष्ट्राः अपि केचन मृताः । व्रणितानां करुणापूर्णः चीत्कारः श्रूयते स्म । व्रणितानां मृतानां च मध्ये हसनगोरी कुत्र स्यात् इति पिङ्गलः अन्विष्टवान् ।

विस्फोटवेगतः सुदूरं क्षिप्तः हसनः एकस्य खर्जूरवृक्षस्य अधः पतितः आसीत् । यदा पिङ्गलः तम् अन्विष्यन् तत्र आगतवान् तदा सः आत्मानं सम्भालयन् उत्थातुं प्रयत्नं कृतवान् ।

पिङ्गलः हस्तसाहाय्यं यच्छन् पृष्टवान्- "तीव्रतरं व्रणितः न किल भवान् ?"

"द्वारम् अन्तः न कीलितम् आसीत् । द्वारसमीपे एव विस्फोटकं स्थापितम् आसीत् " इति पिङ्गलः ज्ञातवान् । यदा द्वारम् उद्घाटितं तदा कवाटविस्फोटकयोः मध्ये घर्षणम् उत्पन्नम् । तेन च विस्फोटः सञ्जातः आसीत् ।

विस्फोटनेन सर्वे भीताः । सैनिकेषु केचन द्वारखण्डैः ताडिताः सन्तः व्रणिताः । उष्ट्राः केचन भीत्या पलायिताः । केचन सैनिकाः पतनेन व्रणिताः ।

विस्फोटकारणतः सर्वत्र धूमः व्यापृतः आसीत् । कुत्र किं जातम् ? किं प्रचलति ? इति कोऽपि न ज्ञातवान् ।

धूमस्य सान्द्रता यदा न्यूना जाता तदा पिङ्गलः तत्रत्यं दृश्यं दृष्ट्वा भीत्या कम्पितः ।

"भाग्यवशात् अहं दुर्मरणतः रक्षितः । यदि विस्फोटजातेन वायुना अहम् एतावद्दूरं न क्षिप्तः स्याम्, तदा मम मरणं एव अभविष्यत्" इति वदन् हसनः उत्थाय तथैव उपविष्टवान् ।

"वस्तुतः भाग्येन एव आवां उभौ अपि रक्षितौ । तत्र पश्यतु, अस्माकम् अर्धादधिकाः सैनिकाः गतप्राणाः सन्ति । अवशिष्टेषु बहवः तीव्रतरं व्रणिताः हाहाकारं कुर्वन्ति" इति उक्तवान् पिङ्गलः ।

एकक्षणानन्तरं सः पुनः उक्तवान्- "द्वार-स्पर्शनसमये एव, अत्र काऽपि वञ्चना अस्ति इति अहं ज्ञातवान् । अतः द्वारं नोदयित्वा झटिति पृष्ठतः धावितवान् ।

वस्तुतः मया द्वारं सर्वशक्त्या न नोदनीयम्

आसीत्। यतः तत् अन्तः न कीलितम् आसीत्। द्वारस्य समीपे स्थापितेन स्फोटकेन सह घर्षणेन एव एषः स्फोटः सञ्जातः।"

हसनगोरी इदानीम् अपि व्रणजातां वेदनाम् अनुभवति स्म। अतः सः उत्थाय चलितुं न तथा समर्थः। वस्त्रेषु लग्नाः सिकताः अपसारयन् सः उक्तवान्- "दुष्टभैरवस्य एव एतत् कार्यम्। अस्माकं सैनिकानां लुण्टाकानां च मध्ये युद्धं दुर्गस्य अन्तः एव प्रवृत्तम्। सः भैरवः सैनिकान् सर्वान् मारयित्वा, अस्मान् अपि मारयितुं योजनां कृतवान् आसीत्। इदानीम् अस्माभिः प्रथमं भैरवनाथः अन्वेष्टव्यः। यथाकथम् अपि सः नाशनीयः।"




अनन्तरं हसनगोरी पिङ्गलेन सह, पतितानां सैनिकानां समीपं गतवान्। व्रणितानां कृते यथासाध्यं प्रथमोपचारं कृतवान्। व्रणनाम् उपरि पट्टिकाः बन्धितवान्। अनन्तरम् अवशिष्टैः सैनिकैः सह उभौ अपि दुर्गं प्रविष्टवन्तौ।

अन्तस्थं दृश्यं तु बहु भीकरम् आसीत्। सर्वत्र मृतशरीराणि पतितानि आसन्। कुत्रचित् रक्तप्रवाहे पतिताः दृश्यन्ते स्म। अन्यत्र कुत्रचित् खड्गादयः दृश्यते स्म। तत्रत्यानि उपभवनानि अग्निना ज्वालितानि आसन्। अतः दुर्गस्य अन्तर्भागः श्मशानम् इव दृश्यते स्म।

"अस्मदीयाः सर्वे सैनिकाः मृताः सन्ति। एतत् कथं जातम् इति अहं न जानामि। ते लुण्टाकाः कथम् अन्तः प्रविष्टाः? बहिः अस्मदीयाः सैनिकाः विरोधं न प्रकटितवन्तः वा? प्रायः अस्मदीयेषु कश्चित् तेषां साहाय्यं कृतवान् स्यात्। अन्यथा लुण्टाकाः अस्मदीयान् कदलीवृक्षान् इव मारयितुं समर्थाः न भवन्ति स्म" इति हसनगोरी स्वशङ्कां प्रकटितवान्।

"प्रवृत्तं तु यथाकथमपि स्यात्। किन्तु इदानीम् अस्माभिः किं करणीयम्?" इति पिङ्गलः पृष्टवान्।

किञ्चित्कालपर्यन्तम् उभौ अपि मौनं सञ्चरन्तौ प्रवृत्तं सर्वनाशं परिशीलितवन्तौ।

पिङ्गलः स्वसूचनाम् उपस्थापितवान्–



''अस्माभिः इदानीम् एकः क्षणः अपि व्यर्थं न यापनीयः। शीघ्रातिशीघ्रं लुण्टाकाः अन्वेष्टव्याः। किन्तु विशालायाम् अस्यां मारुभूमौ तेषाम् अन्वेषणं शक्यं वा इति मम संशयः।''

''किमर्थं न शक्यम्?'' इति वदन् हसनगोरी कांश्चन सैनिकान् किमपि सूचितवान्। ते झटिति दुर्गात् बहिः निर्गताः।

तेषु एकैकः अपि एकैकस्यां दिशि गत्वा अल्पे एव काले प्रत्यागतः।

आगतैः सैनिकैः सह वार्तालापं कृत्वा हसनगोरी पिङ्गलम् उक्तवान्- ''सद्योजातैः उष्ट्राणां पदचिह्नैः वयं ज्ञातुं शक्नुमः यत् लुण्टाकाः क्रोशद्वयमिते दूरे पर्वते कुत्रापि निलीनाः सन्ति। ते इदानीं प्रायः विजयोत्सवम् आचरन्तः सुरां पीत्वा मत्ताः सन्तः सुप्ताः भवेयुः'' इति।

पिङ्गलः मरुभूमिविषये किमपि न जानाति किल? अतः सः हसनगोरिवचनानि सर्वाणि मौनं श्रुत्वा अङ्गीकारं प्रदर्शयति। हसनगोरिवचनं सत्यं मन्यमानः सः उक्तवान्- ''भवतः वचनं सत्यम् चेत् अस्माभिः इदानीं एव गत्वा तेषाम् उपरि आक्रमणं करणीयम्। अस्माकं आक्रमणं तेषां तु अनिरीक्षितम्। अतः वयं सुलभतया जयं प्राप्तुं शक्नुमः।''

पिङ्गलस्य सूचनाम् अङ्गीकुर्वन् हसनगोरी तत्क्षणम् एव पर्वतस्य दिशायां गन्तुं सर्वान् सैनिकान् आज्ञापितवान्। तेषां पृष्ठतः पिङ्गलेन सह सः स्वयम् अपि प्रस्थितः।

एकघण्टानन्तरं ते पर्वतस्य समीपम् आगतवन्तः। यस्मिन् मार्गे ते आगतवन्तः स च मार्गः पर्वतयोः मध्ये अग्रे गच्छति स्म।

पिङ्गलः तत्रैव स्थित्वा पर्वतप्रदेशम् एकवारं सम्यक् परिशीलितवान्। अनन्तरं सः हसनगोरिम् उक्तवान्- ''समूहगमनेन इदानीं प्रयोजनं नास्ति। वयं विभज्य गच्छामः। एकः गणः वामतः, अपरः गणः दक्षिणतः च गच्छतु। उष्ट्रान् सर्वान् अत्र एव त्यक्त्वा पद्भ्याम् एव गच्छामः। जागरूकतया पर्वतकन्दरेषु तान्

अन्वेष्टुं प्रयत्नं कुर्मः।"

हसनः पिङ्गलस्य सूचनाम् अङ्गीकृतवान्। उभौ अपि सैनिकानाम् अर्धार्धभागेन सह पर्वतम् आरूढवन्तौ। भैरवस्य अन्वेषणं कुर्वन्तौ तौ शिखरपर्यन्तं गतवन्तौ। तथापि कुत्रापि भैरवः न दृष्टः।

अकस्मात् पिङ्गलः पर्वतस्य मध्यभागे उत्पद्यमानम् अस्पष्टं कोलाहलध्वनिं श्रुतवान्। सर्वान् सैनिकान् निश्शब्दं स्थातुम् आदिश्य सः शिलायाः पार्श्वे निलीनः भूत्वा अधः दृष्टिं प्रसारितवान्।

पर्वतस्य मध्यभागे शिलाभिः वृक्षैः च आवृतः कश्चन समतलप्रदेशः आसीत्। तत्र केचन उपविष्टाः, केचन नृत्यन्तः च आसन्। पिङ्गलः एतान् दृष्टवान्। 'एते एव लुण्टाकाः' इति पिङ्गलः निश्चितवान्।

"भैरवपक्षीयाः मया दृष्टाः" इति हसनगोरिं सूचयितुम् इच्छन् पिङ्गलः काहलं मुखे स्थापयित्वा विशिष्टं सङ्केतं कृतवान्।

एषः शब्दः लुण्टाकपक्षीयैः अपि श्रुतः। झटिति नृत्यं गानं सर्वं स्थगितम्। "लुण्टाकाः अपि जागरिताः। अतः एकक्षणस्य अपि विलम्बः न करणीयः" इति चिन्तयित्वा पिङ्गलः एकां बृहतीं शिलां, लुण्टाकान् उद्दिश्य नोदितवान्। त्वरितगत्या शिलाः नोदयितुं सैनिकान् अपि आदिष्टवान्।




एकक्षणम् अपि न अतीतम्। तावति काले सशब्दम् आगतः एकः बाणः पिङ्गलस्य पार्श्वतः निर्गतः।

पिङ्गलः शिलया अन्तरितः आसीत् इति कृत्वा सः रक्षितः। लुण्टाकाः शूलं धनुः च गृहीत्वा तस्याम् एव दिशायाम् आगतवन्तः।

एतत् दृष्ट्वा पिङ्गलः एकक्षणं किङ्कर्तव्यतामूढः जातः। किन्तु तदा अन्यपार्श्वतः प्रेरिताः शिलाः लुण्टाकानाम् उपरि आपतिताः। "दत्तः सङ्केतः हसनगोरिणा प्राप्तः" इति पिङ्गलः सन्तुष्टः। शिलाः प्रेरयन्तः एव हसनगोरीसैनिकाः अपि लुण्टाकानाम् उपरि आक्रमणं कृतवन्तः।

उभयपार्श्वतः अपि आगच्छतः सैनिकान् दृष्ट्वा भीताः लुण्टाकाः इतस्ततः विकीर्णाः ।

हसनगोरिणा सह विद्यमानाः सैनिकाः उत्साहेन लुण्टाकानाम् उपरि शिलाः प्रेरयन्तः अधः आगतवन्तः, समतलप्रदेशं प्राप्तवन्तः च ।

पिङ्गलः अपि बाणैः आत्मानं रक्षन् सैनिकैः सह अधः आगतवान् । एवम् उभयपार्श्वतः अपि आगत्य सैनिकाः लुण्टाकानाम् उपरि आक्रमणं कृतवन्तः ।

प्रथमं एव लुण्टाकाः पानमत्ताः । प्रकाशः अस्पष्टः अपि ! एतदुपरि सैनिकानाम् अनिरीक्षितम् आक्रमणम् !! लुण्टाकाः किं वा कुर्युः ? ते किञ्चित् विरोधं प्रकटितवन्तः । तथापि पुरतः आगतान् लुण्टाकान् सर्वान् हसनस्य सैनिकाः मारितवन्तः ।

तत्र बृहत्तरशिलाभिः निर्मिताः अनेकाः गुहाः आसन् । तासु गुहासु अन्धकारः व्याप्तः आसीत् । भैरवस्य अन्वेषणे तत्परः पिङ्गलः अविचार्य गुहां प्रवेष्टुं प्रवृत्तः । तदा पर्वतस्य उपरि हसनस्य ध्वनिः श्रुतः– "रे पिङ्गल ! तिष्ठतु तत्र एव । गुहासु अन्धकारः व्याप्तः अस्ति । अन्धकारे गुहाप्रवेशः अपायकरः । अद्य रात्रौ अत्र एव शिबिरं स्थापयामः । श्वः प्रातः भैरवं अन्विष्य समूलं नाशयामः ।"

एवं वदन् हसनगोरी पिङ्गलसमीपम् आगच्छन् आसीत् ।

पिङ्गलः हसनस्य वचनम् अङ्गीकृत्य तत्र एव एकस्याः शिलायाः उपरि उपविष्टवान् ।

तदा सुपरिचितः कश्चन ध्वनिः श्रुतः– "अरे ! भवान् ! पिङ्गलः वा ? भवान् सः एव पिङ्गलः वा– यस्य अवन्तीवटुः इति नामान्तरम् आसीत् ?"

"एषः तु निश्चयेन पद्मपादस्य ध्वनिः" इति चिन्तयन् पिङ्गलः आश्चर्यचकितया दृष्ट्या परितः दृष्टवान् । तदानीं समीपे एव एकस्याः शिलायाः पार्श्वतः एकः पुरुषः मन्दहासं प्रकटयन् पिङ्गलसमीपम् आगतवान् ।

(अनुवर्तते)






# भिक्षुकस्य भाग्यम्

सा च भयङ्करी रात्रिः । चतुर्दिक्षु अन्धकारः व्याप्तः अस्ति । मेघानां गर्जनं श्मशानस्य भीकरत्तां वर्धयति । वायुना कम्प्यमानाः वृक्षाः पानमत्ताः इव इतस्ततः आन्दोलमानाः सन्ति । तथापि त्रिविक्रमः दृढसङ्कल्पेन स्वकार्यं कुर्वन् अस्ति ।

सः पुनः अपि वृक्षस्य समीपम् आगतवान् । वृक्षम् आरुह्य शवं स्वस्कन्धस्य उपरि संस्थाप्य ततः निर्गतः । तदा शवे स्थितः वेतालः वक्तुम् आरब्धवान्—

"राजन् ! भवतः सङ्कल्पः सिद्धिः च श्लाघनीयः एव । किन्तु एकः संशयः- यदर्थं कार्यं कुर्वन् अस्ति तत् सिध्यति वा ? भाग्ये एव यदि न उल्लिखितं तर्हि तत् कथं वा लभ्येत ? पूर्वार्जितपुण्यं विना क्रियमाणः सर्वः अपि प्रयत्नः व्यर्थः एव । एतावदेव न । कदाचित् समीपम् उपस्थितं फलम् हस्तच्युतं भवेत् । उदाहर-

## वेतालकथा



णार्थम् अहम् एकां अन्धवृद्धस्य कथां वदामि। एतेन भवतः मार्गायासः अपि परिहृतः भवेत्।

"एकस्मिन् ग्रामे एकः अन्धः भिक्षुकः आसीत्। तस्य ग्रामस्य अन्तभागे एकः विशालः वृक्षः आसीत्। तस्य वृक्षस्य छाया एव भिक्षुकस्य गृहम्। सः दिने भिक्षार्थम् इतस्ततः अटति। रात्रौ वृक्षस्य छायायां विश्रान्तिम् अनुभवति। एवमेव तस्य जीवनं प्रचलति स्म।

एकदा पार्श्वग्रामे रथयात्रा प्रवृत्ता। भिक्षायाचनार्थं भिक्षुकः रथयात्रां गतवान्। रात्रौ प्रत्यागमनसमये सः ग्रामस्य कुल्यायां पतितः। वेदनया मन्दं रोदितुम् आरब्धवान्।

तदा कश्चित् आगत्य हस्तसाहाय्यं यच्छन् उक्तवान्— "तात! उत्तिष्ठतु। भवान् कुल्यां न दृष्टवान् वा?" इति।

"न भोः पुत्र! अहम् अन्धः अस्मि। भिक्षायाचनार्थं पार्श्वग्रामस्य रथयात्रां गतवान् आसम्। भवान् समीपे एव विद्यमानस्य महावृक्षस्य समीपं मां नेतुं शक्नोति वा?" इति वदन् वृद्धः उत्थातुं प्रयत्नं कृतवान्।

अपरिचितस्य साहाय्येन गच्छन् वृद्धः अन्धः पृष्टवान्- "भवान् कः? अद्य एव एतं ग्रामम् आगतवान् इति भाति!"

"भवतः वचनं सत्यम्। अहम्! अत्र अद्य एव आगतवान्। किन्तु अन्धः भवान् एतत् कथं ज्ञातवान्?" इति अन्धेन सह गच्छन् सः अपरिचितः पृष्टवान्।

"मदीयम् अर्धम् आयुः अस्मिन् एव ग्रामे यापितं मया। सर्वेषां ध्वनेः परिचयः अस्ति मम। कस्यापि गृहस्य अतिथिः वा भवान्?" भिक्षुकः एकहस्तेन अपरिचितस्य स्कन्धं गृहीत्वा अपरहस्तेन स्वदण्डं गृहीत्वा गच्छन् आसीत्। पतनकारणतः सः इदानीम् अपि सम्यक् चलितुं न शक्नोति स्म।

"अहं कस्यापि अतिथिः न। भाग्यवञ्चितः कश्चित् असहायः अस्मि। किमपि कार्यम् अन्विष्यन् एतं ग्रामम् आगतवान्। प्रातःकालतः आहारः न लब्धः। अतः आकण्ठं जलं पीत्वा छायायां सुप्तः आसम्। तदा धम् इति पतनशब्दः श्रुतः। अतः भवतः समीपम्

आगतवान् ।"

"भवतः माता पिता वा नास्ति वा ?"

"मातापितरौ बाल्ये एव दिवङ्गतौ। अनन्तरं पितृव्यः मां पोषितवान् । दौर्भाग्यवशात् गतमासे पितृव्यः अपि दिवङ्गतः । गृहोद्योगकौशलं किमपि अहं न जानामि । इदानीं किं करणीयम् इति न स्फुरति । बहुदिनतः प्रयत्ने कृते अपि, उद्योगः कुत्रापि न लब्धः ।"

"भवता सूचितस्य वृक्षस्य समीपम् आगतौ आवाम् । इदानीं वेदना कथम् अस्ति ?" इति वदन् सः गन्तुं प्रवृत्तः ।

"चिरं जीवतु पुत्र ! इदानीं वेदना किञ्चित् न्यूना । अरे, नाम न सूचितवान् भवान् । इदानीं रात्रौ कुत्र वा गच्छति ?"

"मम नाम रमणः । पूर्वं यत्र शयनं कृतवान् आसम्, तत्र एव गच्छामि ।" भिक्षुकः हसन् उक्तवान्– "निराश्रयस्य भवतः तत्र किम् ? अत्र किम् ? अत्र एव शयनं करोतु । वृक्षस्य छायायां सुखं निद्रां करोतु"

भिक्षुकस्य प्रीतिपूर्वकं वचनं श्रुत्वा रमणः स्वपितृव्यं स्मृतवान् । तद्दिने रात्रौ तत्र एव शयनं कृतवान् । ततः आरभ्य तदेव रमणस्य गृहम् अभवत् ।

रमणः प्रतिदिनं भिक्षुकं मन्दिरसमीपे वा मार्गस्य पार्श्वे वा उपवेशयति स्म । भिक्षया लब्धेन उभयोः अपि उदरपोषणं प्रचलति स्म ।



सायं रमणः भिक्षुकं वृक्षसमीपम् आनयति स्म ।

एकदा मध्याह्नसमयः । आतपपीडितः भिक्षुकः उपविष्टः एव सुप्तः आसीत् । तदा कश्चित् धनिकः पुरुषः भिक्षुकस्य समीपम् आगतवान् । भिक्षापात्रे धनस्य स्यूतं स्थापयित्वा गतवान् च ।

"स्यूते खाद्यवस्तूनि भवेयुः" इति चिन्तयन् रमणः स्यूतम् उद्घाटितवान् ।

अरे ! किम आश्चर्यम् ! बहूनि सुवर्णनाण्यकानि सन्ति तत्र ! रमणः आश्चर्यचकितः अभवत् ।

"धनिकः प्रमादवशात् स्यूतं तत्र स्थापितवान् स्यात् ।" इति चिन्तयन् रमणः तं स्यूतं स्वीकृत्य धावितवान् । धनिकस्य समीपं गत्वा उक्तवान्– "स्यूते सुवर्णनाण्यकानि सन्ति ।"



इति उक्त्वा धनिकः ततः निर्गतः ।

एतदनन्तरं रमणस्य मनसि विचारः उत्पन्नः- "कस्यचित् दरिद्रस्य जीवनं समृद्धं भवतु इति दृष्ट्या एव धनिकः दानं कृतवान् । जीवनं समृद्धं कर्तुं मया एव इदानीं किमर्थं प्रयत्नः न करणीयः ?" इति ।

रमणः नगरमार्गम् अनुसृतवान् । नगरं गत्वा सः तत्र शाकविक्रयणम् आरब्धवान् । केषुचित् एव वर्षेषु तेन सहस्रशः रूप्यकाणि सम्पादितानि । धनिकेषु अन्यतमत्वेन सः जनैः गण्यते स्म । धनिकः कश्चित् वणिक् सुलोचना-नामिकया स्वपुत्र्या सह तस्य विवाहं कारितवान् ।

धनिकः उक्तवान्– "भवान् भिक्षुकस्य पुत्रः वा ? भाग्यशाली भवान् । इतःपरं भवतोः भिक्षायाचनस्य आवश्यकता न भविष्यति ।"

रमणः इदानीम् अपि न विश्वसिति । "धनिकः चेदपि यः कोऽपि एतावन्ति सुवर्ण-नाण्याकानि भिक्षारूपेण दातुं शक्नोति वा ?" इत्येषः भावः तस्य मुखे प्रतिभाति स्म ।

"कदाचित् वाणिज्ये अहं निरीक्षापेक्षया अधिकलाभं प्राप्नोमि । तादृशसन्दर्भेषु देवस्य कृते नारिकेलफलस्य समर्पणेन मम तृप्तिः न भवति । अतः अहं लाभे कञ्चित् भागं दरिद्राय ददामि । यदि दरिद्रस्य जीवनं समृद्धं भविष्यति तर्हि मया पुण्यं सम्पादितं भवति किल ?"

सुलोचना बुद्धिमती विवेकिनी च । सा पत्युः विषये एतावत् एव जानाति यत् 'ग्रामात् आगतः रमणः नगरे अकस्मात् वाणिज्यम् आरब्धवान्' इति । द्वित्रवर्षाणाम् अनन्तरं कश्चित् शाकविक्रयिकः रमणस्य गृहम् आगतवान् । सः रमणस्य ग्रामे एव निवसति स्म । सः, रमणस्य पितृव्यस्य मरणं, रमणस्य ग्रामत्यागं सर्वं सुलोचनायै निवेदितवान् ।

एतत् श्रुत्वा सुलोचनायाः कुतूहलम् अधिकं जातम् । "अल्पे एव समये पतिः कथम् एतावत् धनं सम्पादितवान् ?" इति सा ज्ञातुम् इष्टवती ।

सायङ्काले रमणः गृहम् आगतवान् । तदा सुलोचना स्वकुतूहलं निवेदितवती ।

सुलोचनायाः वचनेन रमणः जागरितः इव, म्लानः च। गाढनिद्रातः कश्चित् तम् उत्थापितवान् इव।

रमणस्य मौनं दृष्ट्वा सुलोचना चिन्तितवती- 'अत्र किमपि रहस्यम् अस्ति।' सा पुनः तद्विषये पृष्टवती।

पत्न्याः समीपे असत्यं वक्तुम् अनिच्छन् रमणः- "पापमूलकेन सम्पादितेन धनेन एतत् वाणिज्यम् आरब्धवान् इति एतावदेव अहं वक्तुम् इच्छामि।एतद्विषये अधिकं मा पृच्छतु" इति उक्तवान्।

तदा सुलोचना उक्तवती- "पूर्वं कदाचित् पापम् आचरितं स्यात्। किन्तु पापस्य परिहारः अपि कश्चन भवति एव। आत्मीयैः सह समालोचनया कोऽपि मार्गः स्फुरति। पापपरिहारेण मनसः शान्तिः लभ्यते" इति।

सुलोचनायाः वचनेन रमणः मनसः समाधानं प्राप्तवान्। अनन्तरं सः पूर्वतनं समग्रं वृत्तान्तं पत्न्यै निवेदितवान्। अन्ते उक्तवान् च- "इदानीम् अपि सः अन्धः भिक्षुकः प्रायः जीवति। अतः सः किमर्थम् अस्माभिः स्वगृहं न आनेतव्यः? एवं पापस्य परिहारः कर्तुं शक्यते किल?" इति।

सुलोचना चिन्तितवती- "मम पतिः अधर्मेण धनं सम्पादितवान् स्यात्। तथापि सः सज्जनः एव" इति। पत्युः पूर्वकथां श्रुत्वा तस्याः नेत्रतः अश्रूणि आगतानि। अश्रूणि मार्जयन्ती सा उक्तवती- "भवता एतत् कार्यं पूर्वम्





एव करणीयम् आसीत्। भवता वृथा विलम्बः कृतः" इति।

"सः अत्र आगन्तुं न सिद्धः चेत्..." इति रमणः सन्देहं प्रकटितवान्।

"तदा अहम् एव गत्वा तम् आनेष्यामि। इदानीं तु गमनसमये भवान् किञ्चित् धनम् अपि नयतु। सः आगन्तुं न सिद्धः चेत् धनं दत्त्वा आगच्छतु" इति उक्तवती सुलोचना।

रमणः झटिति उत्थाय मुखादिकं प्रक्षालितवान्। किञ्चित् उपाहारं स्वीकृतवान्। अनन्तरं सः पञ्चसहस्ररूप्यकाणि स्वीकृत्य तत्क्षणे एव भिक्षुकस्य ग्रामं प्रस्थितः।

ग्रामप्राप्तौ रात्रिसमयः आगतः आसीत्। रमणः वृक्षस्य समीपं गत्वा दृष्टवान्। किन्तु तत्र भिक्षुकः नास्ति! वसतिचिह्नम् अपि किमपि न दृश्यते। एतेन रमणः खिन्नः, चिन्तामग्नः च। 'इदानीं किं करणीयम्?' इति चिन्तयन् सः तथैव एकक्षणं स्थितवान्।

"किं पश्यति अत्र? अन्धः भिक्षुकः इदानीं शिवालये निवसति" इति ग्रामीणः कश्चित् उक्तवान्।

रमणः वेगेन देवालयसमीपं गतवान्। तत्र स्थितम् एकं ग्रामीणं पृष्टवान्- "अत्र कश्चित् अन्धः भिक्षुकः निवसति वा?"

सः ग्रामीणः देवालयस्य पुरतः उपविश्य धूमपानं कुर्वन् आसीत्। परीक्षादृष्ट्या सः रमणम् एकवारं सम्यक् परिशीलितवान्। रमणस्य कण्ठे स्थिते रत्नहारे तस्य दृष्टिः क्षणकालं स्थिता आसीत्। अनन्तरं सः उक्तवान्- "किम्? अन्धः भिक्षुकः इति? आम्, सः अत्र एव निवसति। अल्पे एव काले सः आगमिष्यति" इति।

रमणः शिवालयस्य अन्तः प्रविष्टवान्। स्तम्भम् आधारीकृत्य उपविष्टवान्। श्रान्तिकारणतः तथैव निद्रां प्राप्तवान्।

अल्पे एव काले तेन शिरसि दण्डप्रहारः अनुभूतः। रमणः झटिति जागरितः, परितः दृष्टवान्। कश्चित् धनस्यूतं स्वीकृत्य पलायमानः अस्ति। रमणः अन्धकारे अपि ज्ञातवान्- "पूर्वं भिक्षुकविषये यं पृष्टवान् आसीत्, सः एव चौर्यं कृतवान्" इति।

वेदनाम् असहमानः रमणः चीत्कारं कृतवान्। तेन समीपे सुप्तस्य भिक्षुकस्य निद्राभङ्गः जातः। समीपम् आगच्छन्तं भिक्षुकं दृष्ट्वा रमणः उक्तवान्- "तात! अहं पापी रमणः अस्मि। मां क्षाम्यतु भवान्।"

'इतः गमने किं कारणम्? गमनानन्तरं किं किं प्रवृत्तम्?' इत्यदिकं सर्वं भिक्षुकाय निवेदितवान् रमणः। अनन्तरं "इदानीं मम गृहं गच्छावः" इति अनुरोधम् अपि कृतवान्।

भिक्षुकः प्रथमं रमणस्य शिरसि जातस्य व्रणस्य उपरि वस्त्रपट्टिकां बन्धितवान्। पुनश्च मनसि किमपि चिन्तयन् हसित्वा तूष्णीम् उपविष्टवान्।

"वदतु तात! तर्हि मया सह आगमिष्यति किल? मम पत्नी अपि भवन्तम् आनेतुम् अनुरोधं कृतवती। यदि भवान् न आगमिष्यति तर्हि भवन्तं नेतुं सा स्वयम् आगमिष्यति।" इति वदन् रमणः भिक्षुकस्य स्कन्धस्य उपरि प्रीत्या हस्तं स्थापितवान्।

तदा भिक्षुकः उक्तवान्- "भाग्यं कियत् बलयुतं भवति! यत् भाग्ये न लिखितं तत् कथञ्चित् अपि न प्राप्यते एव। अतः एव भवान् मम कृते दातुं यत् धनम् आनीतवान् तत् चोरः चोरितवान्। तदपि भगवतः पुरतः! इतःपूर्वम् अपि सुवर्णनाण्यकानां स्यूतः मया एव प्राप्तः आसीत्। किन्तु तस्य अनुभोगः



मम भाग्ये न लिखितम् आसीत्। भवतः भाग्ये आसीत्। अतः भवान् तत् उपयोक्तुं शक्तवान्। प्रसिद्धः धनिकः सञ्जातः च।

ललाटे लिखितं परिमार्जयितुं न शक्यते। 'भाग्यम् एव मानवं नियन्त्रयति' इत्यपि वक्तुं शक्यते। मम भाग्यं तु स्पष्टम्। तत् दीर्घा रात्रिः इव। तत्र पुनः सूर्योदयः नास्ति एव। अतः अहं भवता सह न आगमिष्यामि। प्रातःकाले भवान् स्वगृहं गन्तुं शक्नोति" इति।

रमणः किमपि वक्तुम् असमर्थः। सः तूष्णीम् उपविष्टवान्। रात्रिः एवम् एव अतीता।

प्रातःकाले दैन्यं प्रकटयन् रमणः भिक्षुकं पृष्टवान्- "तात! भवान् न आगमिष्यति एव?"

भिक्षुकः निराकृति सूचयन् शिरः कम्पितवान्। अनन्तरं स्वसमीपे स्थिते स्यूते हस्तं प्रसार्य किञ्चित् धनं बहिः आनीतवान्। तत् रमणस्य हस्ते दत्त्वा उक्तवान्- "एतत् मार्गव्ययार्थम् भवतः समीपे भवतु।"

"तात! इतःपरं किम् अहं वदामि? स्वकीयम् आरोग्यं रक्षतु। भाग्ये लिखितम् अस्ति चेत् पुनः मिलामः" इति उक्त्वा हताशः रमणः अश्रूणि मुञ्चन् नगरं गतवान्।

वेतालः एवं कथां समाप्य उक्तवान्- "महाराज! भिक्षुकेन प्रथमं सुवर्णनाण्यकानां स्यूतः यः प्राप्तः आसीत् तं रमणः नीतवान्। द्वितीयवारं रमणः पञ्चसहस्ररूप्यकाणि आनीतवान्। तदपि केनापि चोरितम्। एतत् द्वयम् अपि दौर्भाग्यवशात् जातम्।

किन्तु सर्वम् अपि भाग्यवशात् जातम् इत्यपि वक्तुं न शक्यते। यतः रमणः यदा आहूतवान्, तदा तेन सह भिक्षुकः नगरं गन्तुं शक्नोति स्म। तथापि न गतवान्। तर्हि अत्र कस्य दोषः? उत्तरं जानन् अपि भवान् न वदति चेत् भवतः शिरः सहस्रधा भग्नं भवेत्।"

"भिक्षुकः रमणेन सह नगरं गन्तुं शक्नोति स्म, सत्यम्। किन्तु दौर्भाग्यं निवारितं भवेत् इति आशा तु न आसीत्। यतः दौर्भाग्यं भिक्षुकं छाया इव सर्वदा अनुसरति स्म। अतः एव प्रथमवारं धनं रमणः स्वीकृत्य गतवान्। द्वितीयवारं चोरः चोरितवान्। "यदि अहं रमणस्य गृहं गमिष्यामि तर्हि दौर्भाग्यं तम् अपि पीडयति" इति भिक्षुकः दृढं विश्वसिति स्म।

भिक्षुकः रमणं पुत्रम् इव प्रीत्या पश्यति स्म। रमणस्य हितार्थं मरणपर्यन्तम् अपि भिक्षुकजीवनं यापयितुं सः सिद्धः आसीत्। अतः एव सः अवसरे प्राप्ते अपि रमणेन सह नगरं न गतवान्।"

एवं वदता विक्रमेण मौनभङ्गः कृतः आसीत्। अतः शवे स्थितः वेतालः पुनः गत्वा वृक्षम् आश्रितवान्।





# भीरुः

बदरीप्रसादः मालवदेशस्य एकस्मिन् ग्रामे निवसति स्म । तस्य बाल्ये एव मातापितरौ दिवङ्गतौ । अतः पितामही एव तं पोषयति स्म ।

बदरीप्रसादः द्रष्टुं सुदृढः युवकः । किन्तु स्वभावतः सः अतीव भीरुः । स्वकीयां छायाम् दृष्ट्वा अपि सः भीत्या कम्पते स्म ।

एकदा सायङ्काले कश्चित् सन्यासी तस्य गृहम् आगतवान् । बदरीप्रसादस्य पितामही साधु-सन्यासिनां विषये श्रद्धालुः आसीत् । अतः सा भक्त्या सन्यासिनः सेवां कृतवती ।

सन्यासी यदा भोजनं कर्तुम् उपविष्टः तदा बदरीप्रसादः समीपे एव उपविश्य सन्यासिनं कुतूहलदृष्ट्या पश्यन् आसीत् । तदा पाकशालातः एकः मूषिकः आगतः । बदरीप्रसादस्य पार्श्वे उपविष्टः मार्जारः एतत् दृष्ट्वा भीत्या 'म्यांव् म्यांव्' इति वदन् बहिः पलायितः ।

विना आक्रमणं पलायमानं मार्जारं एनम् दृष्ट्वा सन्यासी आश्चर्यचकितः । पितामही बदरीप्रसादम् उक्तवती– "मूषकपीडां निवारयितुम् इच्छन् भवान् मार्जारं पालितवान् । किन्तु सः अपि भवान् इव भीरुः सञ्जातः । इदानीं सः मूषकं दृष्ट्वा पलायनं करोति ! भवतः हस्तस्पर्शेन सर्वेऽपि जन्तवः भीरवः भविष्यन्ति" इति ।

एतत् श्रुत्वा सन्यासिनः कुतूहलः उत्पन्नः। भोजनानन्तरं सः सन्यासी हस्ते विद्यमानाः रेखाः आसक्त्या दृष्टवान् । मनसि एव सङ्कलन-व्यवकलनादिकं कृतवान् । अनन्तरं पितामहीम् एकान्ते आहूय उक्तवान्– "भवत्याः पौत्रस्य हस्तरेखा विचित्रा अस्ति । एषः भीरुः इति उक्त्वा पदे पदे न निन्दतु" इति ।

"स्वामिन् ! अहं किं वा करोमि ? एतस्य व्यवहारं दृष्ट्वा अनिच्छन्त्याः अपि मम कोपः आगच्छति । भवतः अनुग्रहेण यदि अस्य



भीरुता निवारिता स्यात् तर्हि अहम् आजीवनं कृतज्ञा भविष्यामि'' इति खेदेन उक्तवती पितामही ।

सन्यासी तां सान्त्वयन् उक्तवान्– ''एतस्य भीरुता औषधेन न दूरं गच्छति। अस्य हस्ते विचित्राः रेखाः सन्ति इति मया उक्तं किल ? भीरुताकारणात् एव किमपि कल्याणकारि कार्यं प्रचलिष्यति।''

एतस्याः घटनायाः अनन्तरं बदरीप्रसादः कदाचित् ग्रामस्य भूस्वामिनः भवनस्य पुरतः गच्छन् आसीत्। तत्र भूस्वामिना पालितः शुनकः तेन दृष्टः। शुनकः अतीव सुन्दरः आसीत्। बदरीप्रसादः तम् उन्नीय प्रीत्या आलिङ्गितवान्। भूस्वामी एतत् दृष्टवान्। कुपितः सः बदरीप्रसादं तर्जयित्वा प्रेषितवान्।

दौर्भाग्येण तद्दिने रात्रौ केचन चोराः भूस्वामिनः गृहं प्रविष्टवन्तः। किन्तु आश्चर्यस्य विषयः यत् शुनकः चोरान् दृष्ट्वा पलायितः। शुनकस्य विचित्रम् एतं व्यवहारं दृष्ट्वा भूस्वामी चकितः। ''बदरीप्रसादः एव अत्र कारणम्'' इति भूस्वामी निश्चितवान्। तद्दिने एव न्यायालयं गत्वा बदरीप्रसादस्य उपरि अपराधम् आरोपितवान्॥

न्यायाधीशः भूस्वामिनः सर्वाणि वचनानि श्रुतवान्। ''अहं यत् वदामि तत् सत्यम् एव वदामि इति वदतु'' इति वदन् बदरीप्रसादस्य हस्ते भगवद्गीतां दत्तवान्।

सत्यप्रतिज्ञां स्वीकृत्य बदरीप्रसादः यदा गीतापुस्तकं प्रत्यर्पयितुम् प्रवृत्तः, तदा अकस्मात् न्यायाधीशस्य हस्तः तेन स्पृष्टः। एतेन न्यायाधीशस्य स्वभावे एव परिवर्तनं जातम्। तस्य मनसि अपि भीरुता प्रविष्टा।

इतः पूर्वम् एषः न्यायाधीशः निर्भीकः इति प्रसिद्धः आसीत्। अपराधिनः दण्डने सः अतीव निष्ठुरः। एतादृशः न्यायाधीशः बदरीप्रसादस्य हस्तस्पर्शमहिम्ना भीत्या उक्तवान्- "यदि अहं निर्णयं वदामि, तर्हि पक्षीयः विपक्षीयः वा यः कोऽपि कुपितः भवत्येव। अतः अहं निर्णयम् अनुक्त्वा एव अद्यतनं व्यवहारं समापयामि'' इति।

एवम् उक्त्वा सः उत्थाय गतवान् एव।

भूस्वामी एतत् दृष्ट्वा आश्चर्यचकितः । 'बदरीप्रसादः कीदृशः अद्भुतः पुरुषः स्यात् ?' इति सः मनसि एव चिन्तितवान् ।

तस्य राज्यस्य मन्त्री सुगुणवर्मा भूस्वामिनः परिचितः आसीत् । अतः भूस्वामी मन्त्रिणे बदरीप्रसादस्य समग्रं वृत्तन्तं निवेदितवान् । "बदरीप्रसादस्य हस्तस्पर्शस्य प्रभावः मार्जरस्य शुनकस्य न्ययाशीशस्य उपरि समानः आसीत् । अतः तस्य हस्तस्पर्शे एव विशेषप्रभावः अस्ति" इति मन्त्री निश्चितवान् । अतः भूस्वामिनम् उक्तवान्–"अद्य एव बदरीप्रसादं राजधानीं प्रेषयतु" इति ।

यदा बदरीप्रसादः मन्त्रिणं द्रष्टुम् आगतवान् तदा मन्त्री प्रसिद्धमल्लेन एकेन सह वार्तालापं कुर्वन् आसीत् । मन्त्री मल्लाय बदरीप्रसादस्य परिचयं कारितवान् । बदरीप्रसादः मल्लं सविनयं नमस्कृत्य हस्तान्दोलनं कृतवान् । किम् आश्चर्यम् !! सुप्रसिद्धः मल्लः– यश्च मल्लाग्रेसरान् अपि सलीलं जितवान् आसीत्- मुखम् अवनमय्य ततः पलायितवान् ।

मन्त्री सैनिकान् सम्प्रेष्य तं मल्लं पुनः स्वसमीपम् आनायितवान् । "तथा पलायने किं कारणम् ?" इति पृष्टवान् ।

लज्जितः मल्लः कम्पमानेन स्वरेण उक्तवान्- "किं कारणम् इति न जानामि, मम मनसि इदानीं महती भीतिः उत्पन्ना । कश्चित् मां पराजयेत इति आशङ्का मां प्रबलं बाधते" इति ।





एतेन प्रयोगेण मन्त्रिणः निष्कर्षः दृढः जातः यत् "बदरीप्रसादस्य हस्तस्पर्शे कश्चन विशेषप्रभावः अस्ति। एतत्कारणतः यः कोऽपि जन्तुः भीरुः भविष्यति" इति।

बदरीप्रसादसम्बन्धिनीम् एताम् आश्चर्यजनकवार्तां मन्त्री महाराजाय निवेदितवान्। राजा एतत् श्रुत्वा कुपितः। सः क्रोधतप्तः एव आदेशं दत्तवान्- "एषः निश्चयेन शापग्रस्तः अस्ति। शापग्रस्तेन स्वहस्तस्पर्शेन एषः समग्रं राज्यम् एव भीरुपूर्णं कुर्यात्। अतः प्रथमम् एषः शूले आरोपणीयः" इति।

बदरीप्रसादस्य मरणदण्डनं श्रुत्वा तस्य पितामही अत्यतं रुदितवती। सा मन्त्रिणः पादयोः पतित्वा, पौत्रस्य प्राणभिक्षां प्रार्थितवती।

मन्त्री सुगुणवर्मा ताम् उक्तवान्- "आर्ये, भवती निश्चिन्ता भवतु। तस्य शूलारोपणं निवारयितुं कमपि उपायं चिन्तयामः" इति

अनन्तरं सः राजानं निवेदितवान्- "महाराज! त्वरया कोऽपि निर्णयः न स्वीकरणीयः। एकमासानन्तरम् एतं शूलम् आरोपयामः। तावत्पर्यन्तं, यथा अस्य दुष्प्रभावः अन्येषाम् उपरि न भवेत् तथा बन्धने स्थापयामः" इति।

राजा मन्त्रिणः सूचनाम् अङ्गीकृतवान्। मन्त्री बदरीप्रसादस्य कृते सुसज्जिते एकस्मिन् भवने वसतिव्यवस्थाम् उपकल्पितवान्।

दश-पञ्चदशदिनानाम् अनन्तरम् एका वार्ता महाराजेन प्राप्ता- "कलिङ्गराजः महत्या सेनया सह आक्रमणार्थम् आगतः अस्ति। सः मालवराज्यस्य सीमाप्रान्तं प्राप्तवान् च" इति।

मालवम् एकं लघु राज्यम्। कलिङ्गराज्येन सह युद्धं कर्तुं तस्य शक्तिः नास्ति। अतः राजा मन्त्रिणम् आहूय समस्याम् उपस्थापितवान्।

मन्त्री महाराजाय धैर्यवचनानि उक्तवान्- "राजन्! भीतिः मास्तु। कलिङ्गराजः कथं निवारणीयः इति मया चिन्तितम्। अल्पे एव काले सन्तोषजनिकां वार्तां भवान् शृणोति। तावत्पर्यन्तं धैर्येण तिष्ठतु" इति।

अनन्तरं मन्त्री कलिङ्गराजाय लिखितम् एकं पत्रं बदरीप्रसादस्य हस्ते दत्वा उक्तवान्-

"भवान् इतः साक्षात् कलिङ्गराज्यस्य शिबिरं गत्वा तत्र राज्ञः हस्ते एव एतत् पत्रं ददातु " इति । बदरीप्रसादेन सह केचन सैनिकाः अपि प्रेषिताः ।

बदरीप्रसादः कलिङ्गराजस्य शिबिरं गत्वा राज्ञः हस्ते पत्रं दत्तवान् । कलिङ्गराजः चिन्तितवान् "अस्मिन् पत्रे सन्धिप्रस्तावः कृतः स्यात् । यतः मालवं नाम लघुराज्यम् । मम आक्रमणं सम्मुखीकर्तुं तत् न शक्नोति एव " इति । किन्तु पत्रे एतद्विपरीततया निन्दावाक्यानि लिखितानि आसन् । पत्रं पठित्वा कलिङ्गराजः कोपेण ज्वलितः । क्रोधेन सः उक्तवान्– "गर्वितस्य एतस्य शिरच्छेदं कुर्वन्तु"

एताम् आज्ञां श्रुत्वा बदरीप्रसादः भयेन कम्पितः । अञ्जलिं बद्ध्वा सः दीनस्वरेण राजानं प्रार्थितवान्– "महाप्रभो ! अस्मिन् पत्रे किम् आसीत् इति अहं न जानामि एव । मन्त्रिणः आदेशानुसारम् अहं पत्रम् आनीय दत्तवान्, तावदेव" इति । एवं उक्त्वा सः कलिङ्गराजस्य पादयोः पतितवान् ।

अहो ! आश्चर्यकरं परिवर्तनम् ! पञ्चनिमेषेभ्यः पूर्वं यः सिंहः इव गर्जनं करोति स्म, सः इदानीं मार्जारः इव बिभेति ! कलिङ्गराजः बदरीप्रसादम् उक्तवान्- "अहम् अविचार्य मालवदेशस्य उपरि आक्रमणं कृतवान् । भवतः राजानं सूचयतु यत् अहम् इदानीम् एव सेनां स्वीकृत्य प्रतिगच्छामि इति । एवमेव यत् प्रवृत्तं तद्विषये क्षमां प्रार्थये" इति ।

तद्दिने एव कलिङ्गराजः स्वसेनाशिबिरं निष्कास्य स्वराज्यं प्रतिगतवान् ।

बदरीप्रसादः अजानन् एव राज्यस्य उपरि आपतितां विपत्तिं दूरीकृतवान् आसीत् । एतेन सह तस्य भीरुता, तथा भीरुताजनकशक्तिः उभयम् अपि दूरं गतम् । मन्त्री एतं स्वसेनायां नियोजितवान् ।

मालवराजः मन्त्रिणं सुगुणवर्माणं बहुधा प्रशंसितवान् । राजोचितेन सम्मानेन तं पुरस्कृतवान् च ।





# पितृद्रोहः

पूर्वतनः कश्चन कालः । तदा बोधिसत्वः काशीराज्ये एकस्मिन् ग्रामे कृषिकपुत्ररूपेण जन्म प्राप्तवान् । तस्य नाम आसीत्- कमलाकरः । तस्य पिता गणेशः । माता पार्वती ।

बाल्यतः आरभ्य कमलाकरस्य बुद्धिः तीक्ष्णा। बाल्ये एव सः बहून् गम्भीरविचारान् प्रतिपादयति स्म । मातापित्रोः अपेक्षया पितामहस्य विषये कमलाकरस्य प्रीतिः अधिका आसीत् ।

पितामहः वयसा वृद्धः । गृहे किमपि कार्यं कर्तुं न शक्नोति स्म । गृहसदस्यैः सर्वैः तस्य सेवा करणीया आसीत् । अतः कमलाकरस्य माता सर्वदा स्वकीयम् असमधानं प्रकटयति स्म ।

एकदा पार्वती पतिम् उक्तवती- "भवतः पितुः सेवया एव मम प्राणाः प्रायः निर्गच्छन्ति । समग्रं दिनम् एतदर्थम् एव यापितं भवति । गृहे अस्माकं अन्यानि कार्याणि न सन्ति वा ? कियत्पर्यन्तम् एवं सेवा करणीया ?"

कृषिकः गणेशः कोपमिश्रितस्वरेण उक्तवान्- "यावत् सः जीवति तावत् तस्य सेवा अस्माकं धर्मः । सेवा कष्टम् इति कृत्वा तं वयं किं मारयेम ?"

"यदि मारयामः तत्र कः दोषः ? तस्य जीवनेन किमपि प्रयोजनं तु नास्ति । प्रतिदिनं सः अपि कष्टम् अनुभवति । एतदपेक्षया एकवारम् एव प्राणत्यागः उचितः ।" गणेशस्य वचनस्य अपेक्षया पार्वत्याः वचनम् उच्चस्वरेण आसीत् ।

प्रथमं गणेशाय पार्वत्याः वचनानि न रोचन्ते स्म । पितुः विषये अगौरवं पापकरम् इति सः चिन्तयति स्म । किन्तु क्रमशः पत्न्याः वचनेन प्रभावितः सः तस्याः अभिप्रायम् अङ्गीकर्तुम् आरब्धवान् । इदानीं तस्य मनसि विचारः

स्फुरति स्म यत् 'पितुः मारणे कोऽपि दोषः नास्ति । एतेन पिता वार्धक्यजनित-शारीरिक-पीडातः मुक्तः भविष्यति' इति । अतः पितुः मारणार्थं सः एकां योजनाम् उपकल्पितवान् ।

एकस्मिन् दिने गणेशः पितरम् उक्तवान् "अहं क्षेत्रे एकं कूपं खातुम् इच्छामि । एतदर्थं पार्श्वग्रामस्य भूस्वामितः ऋणं स्वीकरोमि । व्यवहारपत्रे भवतः हस्ताक्षरम् अपेक्षितम् इति भूस्वामी वदति । अतः भवान् मया सह पार्श्वग्रामम् आगच्छतु" इति ।

पिता गणेशेन सह प्रस्थितः । कमलाकरः अपि स्वपितामहम् अनुसृतवान् ।

मार्गे एकम् अरण्यम् आसीत् । गणेशः अरण्यमध्ये शकटं स्थगितवान् । सः एकं कुद्दालं स्वीकृत्य अवतरन् पितरम् उक्तवान्- "तात ! भवान् कमलाकरेण सह अत्र एव तिष्ठतु । अहम् इदानीम् आगच्छामि" इति । एवम् उक्त्वा सः अरण्यं प्रविष्टवान् च ।

गणेशस्य गमनानन्तरं कमलाकरः अपि एकं कुद्दालं स्वीकृत्य पितामहम् उक्तवान्- "तात ! भवान् अत्र एव तिष्ठतु ! अहम् इदानीम् आगच्छामि" इति । गणेशः यस्यां दिशि गतवान् ताम् एव दिशम् उद्दिश्य कमलाकरः अपि गतवान् ।

किञ्चिद्दूरं गत्वा गणेशः एकम् गर्तं खनन् आसीत् । तत्समीपे एव कमलाकरः अपि गर्तं खातुम् प्रवृत्तः ।



समीपे एव खननशब्दं श्रुत्वा गणेशः स्वकार्यं स्थगितवान् । सः शब्दम् अनुसृत्य गतवान् । तत्र स्वपुत्रं दृष्ट्वा आश्चर्यचकितः सः पृष्टवान्- "अरे, कमलाकर ! भवान् अत्र किमर्थं गर्तं खनति ?" इति ।

तदा कमलाकरः उक्तवान्— "येन कारणेन भवान् गर्तं खनति, तेन एव कारणेन अहम् अपि गर्तं खनामि" इति ।

पुत्रस्य वचनं श्रुत्वा गणेशस्य वज्राघातः जातः इव । तथापि धैर्यं धरन् सः पृष्टवान्- "अहं किमर्थं गर्तं खनन् अस्मि इति भवान् जानाति वा ?"

"कारणं किम् इति अहं न जानामि । किन्तु एवं खनने कारणं तु भवति एव किल ?

"अहं भवतः अनुकरणं करोमि चेत् कः दोषः ?" इति मुग्धस्वरेण पृष्टवान् कमलाकरः।

रहस्यं निग्रहीतुम् असमर्थः गणेशः पुत्रम् उक्तवान् "वृद्धः मम पिता कदा मरणं गच्छति इति अहं न जानामि। तस्य मरणानन्तरं आन्तिमसंस्कारस्य दायित्वं मम एव अस्ति।"

"पितामहः इदानीम् अपि जीवति किल ?"

"कः कदा मरणं प्राप्नोति इति केन वा वक्तुं शक्यते ? तत्रापि सः अतीव वृद्धः।"

"कस्यापि जीवनं शाश्वतं न किल ? भवतः मरणानन्तरम् अन्तिमसंस्कारस्य दायित्वं मम एव किल ? यतः अहं भवतः पुत्रःअस्मि।"

पुत्रस्य वचनं श्रुत्वा गणेशः दिग्भ्रान्तः। तं कश्चित् आकाशात् पातितवान् इव। पुत्र-कारणतः गणेशे ज्ञानोदयः जातः। आत्मना क्रियमाणं कर्म कियत् नीचतमम् इति सः ज्ञातवान्।

अनन्तरं सः पितापुत्राभ्यां सह स्वगृहम् आगतवान्।

गृहे तस्य पत्नी पार्वती अतीव सन्तोषेण आसीत्। सा विशेषभोजनं सज्जीकृत्य पत्युः प्रतीक्षायाम् आसीत्।

किन्तु शकटतः अवतरन्तं श्वशुरं दृष्ट्वा तस्याः प्रसन्नता निराशारूपेण परिवर्तिता।

गणेशः पत्न्यै अरण्ये प्रवृत्तं सर्वं वृत्तान्तं निवेदितवान्।

तदा पार्वती आश्चर्यं प्रकटयन्ती उक्तवती- "किम् एतत् ! कीदृशं युगम् आगतम् ? कियत्या प्रीत्या वयं पुत्रस्य पालनपोषणादिकं कृतवन्तः ! किन्तु सः एव पुत्रः जीवतः पितुः अन्तिमसंस्कारार्थं गर्तं खनति ! एतादृशपुत्रस्य मुखदर्शनम् अपि पापकरम्" इति।

पत्नीं विशेषदृष्ट्या पश्यन् गणेशः उक्तवान् "किन्तु अहम् अपि तदेव कार्यं कर्तुं गतवान् किल ? मम पिता बाल्ये मां प्रीत्या न पालितवान् वा ? न पोषितवान् वा ?"

तद्दिनात् आरभ्य पार्वती श्वशुरस्य विषये कदापि अनादरं न प्रकटितवती।





# सैनिकक्रान्तिः

नवीनराज्यानि जेतुं, जितानां रक्षणार्थं च ईस्ट-इण्डिया-कम्पनीसर्वकारस्य, सैन्यम् आवश्यकम् आसीत्। अतः भारतीयाः सैन्ये योजिताः। किन्तु भारतीयानां वेतनम् आंग्लसैनिकानाम् अपेक्षया न्यूनम्, पदे

पदे अवमाननं च। आंग्लेयाः अश्वस्य उपरि प्रयाणं कुर्वन्ति चेत् भारतीयसैनिकाः तेषां वस्तूनि स्वीकृत्य अनुधावन्ति स्म।

सैनिकानां कृते अंग्लेयैः नवीना भुषुण्डिकाः दत्ताः। तत्र गोलकास्त्राणि दन्तेन प्रेरणीयानि आसन्। तत्र प्राणिनां मेदसा लेपनं क्रियते स्म। एतेन भारतीयसैनिकानां मत-





विश्वासस्य आघातः जातः। ते शासनविरोधम् उद्घोषितवन्तः। १८५७तमे वर्षे 'मे' मासस्य १० दिनाङ्के मेरठप्रदेशे भारतीय-सैनिकाः शासनविरोधं प्रकटयन्तः आंग्लेयान् अधिकारिणः बन्धने स्थापितवन्तः।



भारतीयसैनिकाः देहलीनगरं प्रति धावितवन्तः। मार्गे विद्यमानेषु सर्वेषु सैनिकशिबिरेषु विरोधवार्तायाः प्रसारं कृतवन्तः। तेषु सैनिकेषु अपि अतृप्तिः पूर्वम् एव आसीत्। अतः विरोधदावानलः सर्वत्र व्याप्तः अभवत्।

देहलीं गताः भारतीयसैनिकाः 'रक्तदुर्गं' प्रथमं वशीकृतवन्तः। मोगलवंशीयं 'बहादुर षा' महोदयं राजसिंहासने उपवेशितवन्तः। देहली-नगरे आंग्लसेना पराजिता। देहली-नगरं भारतीयसैनिकानां वशे आगतम्।





चित्तराज्ये द्वितीयबाजीरावस्य दत्तक-पुत्रस्य नानासाहेबस्य उत्तराधिकारित्वं आंग्लशासनेन निराकृतम्। तथापि वीरः तात्या टोपे, नानासाहेबं सिंहा-सने उपवेशितवान्। अनन्तरं भारतीयसैनिकानां कृते शासनविरोध-कार्ये साहाय्यम् कृतवान्।

'झान्सीराजेन स्वीकृतस्य दत्तकपुत्रस्य उत्तराधिकारयोग्यता नास्ति' इत्यपि आंग्लशासनेन उक्तम्। झान्सीराज्यं वशीकर्तुं सेना अपि प्रेषिता। झान्सीराज्ञी लक्ष्मीबायी स्वयं सेनायाः नायकत्वं निरूढवती। युद्धे आंग्लसेनां पराजित्य सेनाधिकारिणः कारागारे स्थापितवती।





बन्दीभूतैः सैनिकैः सह गौरवपूर्वकं व्यवहरन्ती लक्ष्मीबायी उक्तवती- ''वयं अतिथिरूपेण भवतः पश्यामः। किन्तु भवद्भिः, 'भारतीयपरम्परणाम् अवमाननं न उचितम्' इति भवतां अधिकारिणः बोधनीयाः'' इति। किन्तु तावति काले प्रसिद्धः आंग्लसेनापतिः ह्यूरोजः, झान्सीराज्यस्य उपरि आक्रमणं कृतवान्।

लक्ष्मीबायी महता धैर्येण युद्धे भागं गृहीतवती। किन्तु आंग्लसेनायाः सङ्ख्या अपरिमिता। शस्त्रास्त्राणि अपि आधुनिकानि!' अतः दुर्गरक्षणे सा असमर्था जाता। अन्ते असहाया सा दत्तकपुत्रेण सह ततः निर्गतवती।





नानासाहेबः तात्या टोपे च झान्सी-राज्ञीं मिलितवन्तौ। त्रयः अपि मिलित्वा ग्वालियर् दुर्गस्य उपरि आक्रमणं कृतवन्तः। तत्र स्थितः आंग्लसमर्थकः सिन्धिया पलायनसूत्रं पठितवान्। ग्वालियरसेना अपि एतैः सह मिलिता। सर्वे मिलित्वा तत्रत्याम् आंग्लसेनां समूलं नाशितवन्तः।

ह्यूरोजः शीघ्रम् एव ग्वालियरसमीपम् आगतवान्। द्विवारं घोरयुद्धं प्रवृत्तम्। लक्ष्मीबायीमहोदयया ततः पलायनीयम् आपतितम्। आंग्लसेनया तस्याः पृष्ठतः धावितम्। मार्गे बहुवारं युद्धम् अभवत। यथाकथम् अपि आंग्लसेनया राज्ञीं बन्धयितुं न शक्तम्। युद्धे राज्ञी तीव्रतरं व्रणिता।





व्रणिता सा १८५८तमे वर्षे 'मे' मासस्य १७ दिनाङ्के दिवङ्गता। तस्या मरणवार्ता श्रुत्वा आंग्लसेनया वेगेन तत्र आगतम्। किन्तु तावति काले एव तदीयसहचरैः अन्तिम-संस्कारः सम्पादितः आसीत्। विश्वचरित्रे लक्ष्मीबायीमहोदयायाः नाम चिरस्थायि जातम्।




# विवेकोदयः

पुलिन्दराज्ये उदयगिरिनामकं नगरं बहुप्रसिद्धम् । तस्य नगरस्य शासकप्रतिनिधिः पुरन्दरः । उदयगिरिनगरस्य शासनं दृष्ट्वा राजा बहु सन्तुष्टः । अतः राजा पुरन्दरस्य उपरि महान्तं विश्वासं स्थापयति ।

एकदा पुरन्दरः नगरव्यवस्थायाः विषये विचारविमर्शार्थं स्वसहायकानां सभाम् आयोजितवान् । तस्यां सभायां केचन नागरिकाः आगत्य उक्तवन्तः– "प्रभो ! नगरे अपराधः प्रवर्धमानः अस्ति । चोराणां लुण्टाकानां च पीडा दिने दिने वर्धते । नागरिकाणां प्राणाः अपायपरिस्थितौ सन्ति । कृपया नगरे योग्यां रक्षणव्यवस्थां परिकल्पयतु" इति ।

नागरिकाणां वचनं श्रुत्वा पुरन्दरः कुपितः । सः उक्तवान्- "मम आगमनतः पूर्वं नगरे कीदृशी व्यवस्था आसीत् इति भवन्तः जानन्ति एव । मम आगमनानन्तरं अपराधिनः सर्वे कारागारे स्थापिताः । नगरस्य कोणे कोणे योग्या रक्षणव्यवस्था कल्पिता । अपराधानां सङ्ख्या अतीव विरला जाता । किन्तु विशालम् एतन्नगरं बहवः आगच्छन्ति गच्छन्ति च । तादृशानां कारणतः कदाचित् अपराधः सम्भवेत् अपि । तदपि विरलतया । भवन्तः तु तिलमात्रम् एव पर्वतीकृत्य वदन्ति" इति ।

"प्रभो ! भवतः आगमनानन्तरं नगरे शान्तिः सुव्यवस्था च स्थापिता इति तु निर्विवादः । अपराधानां सङ्ख्या अपि न्यूना आसीत् । किन्तु एषु दिनेषु अपराधः गणनीयप्रमाणेन प्रवृद्धः । इदानीं लुण्टाकाः दिने एव जनानां धनादिकम् अपहरन्ति । आपणेस्थितानि अमूल्यानि वस्तूनि अपहरन्ति । रात्रौ सुरापानं यथेच्छं प्रचलति । नगरे कोऽपि निश्चिन्ततया निद्रां न करोति" इति वदन्तः नागरिकाः पुनः अपि पुरन्दरस्य मनसि विषय-

"सुभद्रा"




गाम्भीर्यं प्रतिबिम्बयितुं प्रयत्नं कृतवन्तः।

एतेन पूर्वापेक्षया अधिकं कुपितः पुरन्दरः उक्तवान्- "भवतां वचनेषु मम विश्वासः सर्वथा नास्ति। भवन्तः मम विरोधितया किमपि उक्त्वा वातावरणं कलुषयन्ति वा इति मम संशयः।"

पुरन्दरस्य वचनेन नागरिकाः निराशाः। "पुनरपि वदामः चेत् पुरन्दरः इतोऽपि कुपितः भवति" इति चिन्तयित्वा नागरिकाः प्रतिनिवृत्ताः।

पुरन्दरस्य आत्मीयेषु एकः नागराजः पार्श्वे उपविष्टः आसीत्। सः शान्तमनस्कः भूत्वा नागरिकाणां वचनं श्रुतवान् आसीत्। नागरिकाणां गमनानन्तरं सः पुरन्दरम् उक्तवान्- "नागरिकाणां वचने उपेक्षा न उचिता। शान्तमनस्कतया एतद्विषये विचारः करणीयः। तेषां वचनेषु सत्यम् अस्ति इति भाति। यदि दुष्प्रचारः एव तेषाम् उद्देशः तर्हि ते अस्माकं पुरतः किमर्थम् आगच्छेयुः ?

अस्माभिः नगरे सुव्यवस्था स्थापिता, सफलता च प्राप्ता इति तु सत्यम्। कालप्रभावतः इदानीम् अधिकारिषु कर्तव्यविषये उदासीनता उत्पन्ना स्यात्। प्रायः लुण्टाकाः एतस्य अवकाशस्य दुरुपयोगं स्वीकुर्वन्तः सन्ति। अतः अस्माभिः जागरूकैः भाव्यम्। परिस्थितेः सम्पूर्णविवेचनं करणीयम्" इति।

पुरन्दरः तु सफलताप्राप्त्या गर्वितः आसीत्। अतः नागराजस्य वचनैः तस्मिन् किमपि परिवर्तनं न अभवत्। पुरन्दरः नागराजविषये अपि कोपं प्रदर्शयन् उक्तवान्- "भवन्तः सर्वे मां भ्रान्तं चिन्तयन्ति वा ? भ्रान्तः अहं न, भवन्तः एव भ्रान्ताः। प्रत्यक्षप्रमाणैः विना अहं कमपि विषयं न अङ्गीकरोमि" इति। नागराजः तूष्णीं स्थितवान्।

एकसप्ताहानन्तरं एकदा नगरस्य प्रसिद्धः धनिकः पुरन्दरं भोजनार्थम् आहूतवान्। अर्धरात्रपर्यन्तं भोजनसमारम्भः प्रवृत्तः। भोजनं स्वादुकरं आसीत् इति कृत्वा पुरन्दरः अधिकम् एव भुक्तवान्। अतः सः सहचरान् उक्तवान्- "पद्भ्याम् एव गृहं गच्छामः। तेन भोज-

नायासः किञ्चित् इव परिहृतः भविष्यति'' इति।

पुरन्दरः नागराजेन सह पद्भ्याम् एव गृहं गन्तुं प्रवृत्तः। रक्षकप्रमुखः तयोः अनुसरणं कृतवान्।

मार्गः निर्जनः आसीत्। ते किञ्चिद्दूरं यदा गतवन्तः तदा केचन लुण्टाकाः पुरन्दरस्य उपरि आक्रमणं कृतवन्तः। द्वयोः पक्षयोः मध्ये युद्धं प्रवृत्तम्। अनन्तरं लुण्टाकाः पलायितवन्तः। तावति काले पुरन्दरः ज्ञातवान् यत् कण्ठे विद्यमानः अमूल्यः कण्ठहारः इदानीं न दृश्यते इति।

पुरन्दरः नागराजं रक्षकप्रमुखं च चोरान् अनुसर्तुम् उक्तवान्। अनन्तरं स्वयम् अपि चोरान् अनुसृत्य धावितवान्।

पुरन्दरः किञ्चिद्दूरं धावितवान्। तावति काले पार्श्वमार्गतः कश्चित् नागरिकः भयेन कम्पमानः पुरन्दरस्य पुरतः आगतवान्। तस्य कण्ठे एकः रत्नहारः आसीत्। पुरन्दरं दृष्ट्वा सः नागरिकः तत्र एव स्थितवान्।

तं कोपेन पश्यन् पुरन्दरः गर्जितवान्— ''प्रथमं तं रत्नहारम् अत्र आनयतु'' इति। सः नागरिकः रत्नहारं पुरन्दरस्य हस्ते दत्त्वा ततः वेगेन पलायितवान्।

नागराजः एतत् दृष्ट्वा पुरन्दरम् उक्तवान्- ''श्रीमन्! भवान् एव अस्य नगरस्य न्याय-रक्षकः। भवता एव अन्यस्य रत्नहारः बलात्कारेण स्वीक्रियते चेत् कः वा न्यायरक्षणं कुर्यात्? एषा वार्ता नगरे प्रसृता भविष्यति



चेत् भवतः गौरवस्य का गतिः ?'' इति।

पुरन्दरः उक्तवान्- ''किमर्थम् ? चोरतः मदीयं हारं प्रतिस्वीकरोमि चेत् अत्र कः दोषः ? अस्माभिः यस्य अन्वेषणं क्रियते स्म सः एव चोरः दैववशात् प्राप्तः।''

नागराजः पुरन्दरं स्मारितवान्- ''अद्य भवान् समारम्भार्थम् आगमनसमये रत्नहारं न धृतवान् आसीत्। मणयः केचन शिथिलाः इति कृत्वा मम पुरतः एव भवान् रत्नहारं स्वर्णकारस्य हस्ते दत्तवान्।

रक्षणप्रमुखः अपि 'एतत् सत्यम्' इति उक्तवान्। यतः सः एव स्वयं गत्वा स्वर्णकारं आनीतवान् आसीत्। अतः सः रक्षणप्रमुखः अपि पुरन्दरस्य व्यवहारं दृष्ट्वा आश्चर्यं प्रकटितवान्।

पुरन्दरः एतत् स्मृत्वा मनसि एव खेदम् अनुभूतवान्। ''सः पुरुषः कः ? किमर्थं रत्नहारं मौनं दत्त्वा पलायितवान् ?'' इति तस्य मनसि जिज्ञासा उत्पन्ना।

तदा नागराजः उक्तवान्- ''श्रीमन्! सः पुरुषः नगरे प्रसिद्धः एकः धनिकः। नगरे प्रसृतया चौर्यवार्तया पूर्वम् एव सः भीतः आसीत्। अस्मान् चोरान् मन्यमानः सः भीत्या एव रत्नहारं दत्त्वा पलायितवान्।

चोरविषयकेण भयेन नगरे सर्वेऽपि अन्यं शङ्कादृष्ट्या एव पश्यन्ति। अतः भवान् अपि एकं सज्जनं ''चोरः'' इति चिन्तितवान्। चोराणाम् भयतः भवतः मानसिकी स्थितिः एव एवं भवति चेत् नागरिकाणां परिस्थितिः का स्यात् ?'' इति।

नागराजस्य वचनानि श्रुत्वा पुरन्दरस्य अज्ञानं दूरं गतम्।

पुरन्दरः अपरस्मिन् दिने प्रयत्नेन तं सज्जनम् आहूय रत्नहारं प्रत्यर्पितवान्। सुव्यवस्था-स्थापनार्थं दृढं पदानि स्थापितवान्।

अल्पे एव काले नगरे शान्तिः सुव्यवस्था च पुनः स्थापिता। सर्वे नागरिकाः पुनः अपि पुरन्दरस्य गुणगानं कर्तुम् आरब्धवन्तः।





# पाप-परिहारः

नटवरः बाल्यतः आरभ्य स्वभावेन अतीव दुष्टः। स्वकीये अष्टमे वयसि एव तस्य दुष्टता प्रसिद्धा आसीत्। तस्य दुष्टचेष्टा समवयस्कानां विषये केवलं सीमिता न आसीत्। मूकजन्तून् अपि सः निर्दयं पीडयति स्म।

कदाचित् एकं दुर्बलं बालशुनकं नटवरः दृष्टवान्। सः शुनकः बुभुक्षया म्लानः आसीत्। अस्थीनि बहिः दृश्यन्ते स्म। इदानीं सः आहारार्थम् अन्यशुनकैः सह युद्धं कर्तुम् अपि न शक्नोति स्म। अतः नटवरस्य पिता तस्य शुनकस्य कृते प्रतिदिनं किञ्चित् आहारं ददाति स्म। तस्मिन् समये नटवरः आगत्य स्वचेष्टाभिः तं पीडयति स्म।

बुभुक्षया व्याकुलः शुनकः यदा खादितुम् आरम्भं करोति, तदा नटवरः भोजनपात्रम् स्वीकृत्य उच्चस्थाने स्थापयति। तदा शुनकः 'कुयँ कुयँ' इति वेदनापूर्णं शब्दं करोति। किञ्चित्कालानन्तरं नटवरः पुनः भोजनपात्रं तस्य पुरतः स्थापयति। तदा शुनकः कृतज्ञतां सूचयति।

कदाचित् नटवरः शुनकं वृक्षस्य शाखायाम् उपवेशयति। यदा शुनकः भीत्या आक्रोशनं करोति, नटवरः हस्ततालेन स्वकीयम् आनन्दं प्रकटयति। नटवरस्य एतादृशीं दुष्टचेष्टां दृष्ट्वा पिता पुनः तर्जयति, ताडयति च। तथापि नटवरस्य चेष्टाः न्यूना न भवन्ति।

क्रमशः नटवरः युवकः जातः। दुष्टचेष्टासु आसक्तः सः अधिकं विद्याभ्यासं न कृतवान्।

वृष्टेः अभावतः कदाचित् नटवरस्य ग्रामे क्षामः आपतितः। दारिद्र्येण चिन्तया च नटवरस्य पिता शय्याम् आश्रितवान्। अल्पे एव काले दिवङ्गतः च। अनाथः नटवरः जीविकासम्पादनार्थं नगरम् आगतवान्।

सौभाग्येन सः शीघ्रम् एव एकस्मिन्



धनिकस्य गृहे उद्योगं प्राप्तवान्। भोजनम् अतिरिच्य ५० रूप्यकाणां मासिकवेतनं निश्चितम्।

धनिकः सज्जनः धार्मिकः च। सः सेवकानां विषये अतीव प्रीतिं प्रकटयति स्म।

धनिकस्य पुत्रः शेखरः। सः दशवर्षीयः बालकः। शेखरः सर्वदा नटवरस्य समीपम् आगत्य 'कथां वदतु' इति पीडयति स्म।

यदा नटवरः कथां वक्तुम् उद्युक्तः भवति तदा कार्यं स्थगितं भवति स्म। एतत्कारणतः धनिकः नटवरं तदा तदा तर्जयति स्म।

धनिकः चिन्तयति– "नटवरः उद्देशपूर्वकं कार्यं न करोति" इति। अतः एकदा धनिकः नटवरं तर्जयन्- "इदमिदानीं कार्यं कर्तुं भवतः उत्साहः नास्ति इति भाति। एवम् एव भवान् करोति चेत् अहं भवन्तं गृहतः निष्कासयामि।"

नटवरः भीत्या, वास्तविकं कारणम् उक्तवान्। तदा धनिकः शेखरम् आहूय सम्यक् तर्जितवान्। 'इतःपरम् एवं न करणीयम्' इति उपदेशं कृतवान्।

तद्दिनात् आरम्य शेखरः नटवरं पूर्वापेक्षया अधिकं पीडयितुम् आरब्धवान्। यदा नटवरः कार्यं समाप्य विश्रान्तिम् अनुभवति तदा आगत्य शेखरः तं पीडयति स्म।

ग्रीष्मः कालः। शैत्यम् अत्यधिकम् आसीत्। एकस्मिन् दिने प्रातःकाले शेखरः नवीनानि **ऊर्णवस्त्राणि** स्वीकृत्य नटवरसमीपम् आगत्य उक्तवान्– "एतानि वस्त्राणि भवतः कृते मम पित्रा आनीतानि। एतानि निश्चयेन शैत्यं निवारयन्ति। अतः भवान् प्राचीनवस्त्राणि निष्कासयतु। अहं नवीनवस्त्राणि ददामि" इति।

ऊर्णवस्त्राणाम् आशया नटवरः प्राचीनवस्त्राणि सर्वाणि निष्कास्य, एकं स्नानवस्त्रं धृत्वा स्थितवान्। सः मनसि एव चिन्तितवान्- "शेखरः कीदृशः दयालुः!" इति।

धनिकस्य गृहे एकः क्रूरः शुनकः आसीत्। शेखरः तं शुनकम् आनीय नटवरं प्रदर्श्य ग्रहीतुम् आदिष्टवान्। नटवरम् उक्तवान् च- "भोः,जीवितुम् आशा अस्ति चेत् इतः

धावतु । अन्यथा शुनकः भवन्तं मारयिष्यति'' इति ।

नटवरः भीतः । शरीरे स्वेदः उत्पन्नः । सः ततः वेगेन धावितवान् । शुनकः तम् अनुसृतवान् । गृहस्य पृष्ठतः पुरतः सर्वत्र नटवरः धावितवान् । तथापि शुनकः तं न त्यजति । शेखरः तु पुनः पुनः शुनकम् उत्तेजयति । हस्ततालपूर्वकम् उच्चैः हसति च ।



अन्ते शेखरः शुनकं समीपम् आगन्तुम् आदिष्टवान् । शुनकं हस्ते गृहीत्वा नटवरम् उक्तवान्- ''इदानीं शरीरे यथेष्टं स्वेदः उत्पन्नः स्यात् । एतत् शीतलं वस्त्रं धारयतु कृपया'' ।

तानि वस्त्राणि इदानीं वस्तुतः आर्द्राणि आसन् । जलबिन्दवः पतन्ति स्म । वस्त्रं हिमः इव शीतलम् आसीत् । नटवरः तानि वस्त्राणि तत्र एव त्यक्तवान् । स्वकीयानि पुरातनवस्त्राणि धृतवान् ।

शेखरविषये नटवरः अतीव कुपितः आसीत् । अतः सः शेखरस्य पीडां निवेदयितुम् इच्छन् धनिकस्य समीपं गतवान् ।

तस्मिन् समये अन्यः सेवकः शेखरम् आक्षिपन् आसीत् । तत् श्रुत्वा धनिकः उक्तवान्- ''शेखरः कार्यसमये भवन्तं पीडयति चेत् अहम् अवश्यं तं दण्डयामि । किन्तु अवशिष्टसमये कदाचित् सः भवन्तं किञ्चित् इव पीडयति चेत् भवता आक्षेपः न करणीयः एव । शेखरः तु बालः । बाल्ये दुष्टचेष्टाः सहजाः । अतः शेखरम् आक्षिपन् पुनः पुनः मम समीपं न आगच्छतु । एतत् सर्वं श्रोतुं मम समयः नास्ति'' इति ।

नटवरः एतत् श्रुतवान् । ''अहं निवेदयामि चेत् अपि धनिकस्य उत्तरम् एतत् एव'' इति चिन्तयित्वा सः प्रतिनिवृत्तः ।

धनिकस्य गृहे बहवः सेवकाः आसन् । किन्तु शेखरः तु नटवरम् एव अधिकं पीडयति स्म । ते सर्वे एतद्विषये स्वकीयम् अनुकम्पं प्रदर्शयन्ति स्म ।

एकस्मिन् दिने एकः सेवकः शुनकम् एकम् आनीय शेखरस्य कृते दत्तवान् । अनन्तरं सः नटवरम् उक्तवान्- ''इतःपरं



शेखरः भवन्तं न पीडयति। यतः अहं तस्य कृते बालशुनकम् एकं दत्तवान् अस्मि'' इति।

मित्रस्य अनुकम्पं दृष्ट्वा नटवरः आश्चर्यं प्रकटितवान्। मित्रम् उद्दिश्य कृतज्ञतापूर्वम् धन्यवादवचनानि च उक्तवान्।

किन्तु बालशुनकस्य स्मरणमात्रेण बाल्ये-कृतानां दुष्टचेष्टानां चित्राणि मनःपटले प्रति-फलितानि। 'एकस्य दुष्टचेष्टया अन्ये कियत्कष्टम् अनुभवन्ति' इति सः ज्ञातवान्। सः चिन्तितवान्- ''बाल्ये कृतानाम् अपराधानां फलम् इदानीम् अनुभवन् अस्मि। कृतस्य फलम् अनुभोक्तव्यम्। एतत् अनिवार्यम्।''

इदानीं पुनः तस्य मनसि शेखरस्य बाल-शुनकस्य चित्रम् आगतम्। 'शेखरः माम् एव एतावत् पीडयति। तर्हि असहायं तं बालशुनकं कियत् वा पीडयेत्?' अतः नटवरः निश्चित-वान्- 'अहम् एव तं बालशुनकं पालयिष्यामि। बाल्ये कृतस्य पापस्य प्रायश्चित्तं करोमि।'

सः तत्क्षणे एव शेखरसमीपं गतवान्। तस्मिन् समये शेखरः बालशुनकस्य उपरि आक्रमणं कर्तुं क्रूरशुनकं प्रेरयन् आसीत्। बालशुनकः तु भीत्या आक्रोशनं करोति स्म।

एतत् दृष्ट्वा नटवरस्य मनसि करुणा उत्पन्ना। सः शेखरं तर्जयन् उक्तवान्- ''अये! अन्यपीडनम् एव भवतः इच्छा चेत् भवान् मां यथेष्टं पीडयतु। किमर्थम् एतम् असहायम् अल्पवयस्कं शुनकं विना कारणं पीड-यति? प्रथमं शुनकं त्यजतु।''

''अहं न त्यजामि। मां निवारयितुं भवान् कः? इतः अपसरतु। अहं यथा इच्छामि तथा आचरामि।'' इति वदन् शेखरः बालशुनकं दृढं गृहीतवान्।

नटवरः शेखरहस्ततः शुनकं मोचयितुं प्रयत्नं कृतवान्। शेखरः तु न त्यक्तवान्। अन्ते कुपितः नटवरः शेखरस्य शिरसि ताडित-वान्। शुनकं स्वीकृत्य ततः गतवान् च।

एतत् सर्वं धनिकः श्रुतवान्। ''सेवकस्य एतावत् धैर्यम्! सामान्यः सेवकः मम पुत्रं ताडयति वा?'' इति वदन् सः नटवरम् आहूत-

वान्। किमर्थम् एवं कृतम् इति कोपेन पृष्टवान् च।

नटवरः शान्तरीत्या धैर्येण स्थितवान् आसीत्। सः निर्भयम् उत्तरं दत्तवान् "स्वामिन्! शेखरः मां सर्वदा बहु पीडयति। तथापि अहम् एतावत्पर्यन्तं कदापि आक्षेपं न प्रकटितवान्। किन्तु असहायस्य शुनकस्य पीडनम् अहं दृष्टुं न शक्तवान्। अतः कोपेन अहं शेखरं ताडितवान्।"

एवं वदतः नटवरस्य नेत्रयोः अश्रूणि आगतानि। सः स्वकीये बाल्ये कृतानां दुष्टचेष्टानां विवरणं दत्त्वा उक्तवान्- "अहं मम दुष्टचेष्टानां फलम् इदानीम् अनुभवामि। प्रायश्चित्तरूपेण एतं बालशुनकं रक्षयित्वा प्रीत्या पालयितुम् इच्छामि" इति।

नटवरस्य वचनैः धनिकः बहु प्रभावितः। सः नटवरस्य कृते शतं रूप्यकाणि दत्तवान्।

धनिकस्य एतं विचित्रव्यवहारं दृष्ट्वा तस्य पत्नी पृष्टवती– "भवान् शेखरम् उद्दिश्य हितवचनानि उक्तवान्। तथैव पुत्रं ताडितवते नटवराय पुरस्कारं दत्तवान्। एतत् उचितम् वा?" इति।

धनिकः शान्तस्वरेण उक्तवान्- "मम व्यवहारः उचितः एव। बाल्ये नटवरः शेखरः इव दुष्टः आसीत्। इदानीं सः पूर्वकृतस्य अपराधस्य फलम् अनुभवन् अस्ति। यदि शेखरः अपि स्वदुष्टचेष्टां न त्यजति तर्हि तेन अपि कालान्तरे कष्टम् अनुभोक्तव्यं भविष्यति। नटवरः सम्भाव्यमानात् अपराधतः शेखरं रक्षितवान्। एतदर्थम् अहं नटवराय पुरस्कारं दत्तवान्। नटवरस्य आशीर्वादेन शेखरः उत्तमः भविष्यति इति मम विश्वासः।"

अनन्तरकाले नटवरस्य जीवने महत्परिवर्तनं दृष्टम्। सः पुरस्काररूपेण प्राप्तेन धनेन अल्पं वाणिज्यम् आरब्धवान्। शीघ्रम् एव प्रगतिं प्राप्तवान्। नटवरस्य गुणैः प्रभावितः प्रसिद्धवणिक् कश्चित् स्वपुत्रीं नटवराय दत्तवान्। विवाहः महता वैभवेन सम्पन्नः।





# वञ्चकः

गोविन्दपुरे राघवः नाम वणिक् आसीत्। सः वाणिज्येन सह कुसीदव्यवहारम् अपि करोति स्म। सामान्यजनेभ्यः बहु धनं सम्पादयति स्म। यस्मात् पुरुषात् अधिकं धनं स्वीकर्तुं शक्यते, तादृशपुरुषाय केवलं सः ऋणं ददाति स्म। यत्र लाभः नास्ति तत्र राघवः सर्वथा न प्रवर्तते।

तस्मिन् ग्रामे रामनाथः नाम एकः कृषिकः आसीत्। दरिद्रयकारणतः सः सर्वदा ऋणं स्वीकरोति स्म।

एकदा रामनाथः राघवसमीपम् आगत्य उक्तवान्- "भोः महाशय! अहम् इदानीं कष्टपरिस्थितौ पतितः अस्मि। इदानीं ५० रूप्यकाणि भवता दातव्यानि एव। वृद्धिः यावत् अपि भवतु, अहं ददामि। एकसप्ताहानन्तरं वृद्धिसहितं ऋणं प्रत्यर्पयिष्यामि" इति।

राघवः अतीव व्यवहारचतुरः। सः जानाति यत्- "रामनाथस्य परिस्थितिः अतीव शोचनीया अस्ति। एतस्मै ऋणं दत्तं चेत् वृद्धिः किं, मूलधनम् अपि न प्रत्यागमिष्यति" इति। किन्तु सः रामानाथस्य विरोधं सम्पादयितुम् अपि न इच्छति स्म। अतः सः उक्तवान्- "अद्य प्रातः भवान् एव प्रथमग्राहकः। किन्तु किं करोमि? मम हस्तः सर्वथा रिक्तः अस्ति। भवन्तं रिक्तहस्तेन प्रेषयितुं मम इच्छा नास्ति। तथापि अहं किं करोमि, असहायः?" इति।

पञ्चाशत्रूप्यकाणि दातुम् अपि राघवः मयि न विश्वसिति" इति सः बहु खेदम् अनुभूतवान्। क्रमशः तस्य खेदः कोपरूपेण परिणतः। "यथाकथञ्चित् राघवतः धनं स्वीकरणीयम् एव" इति सः निश्चितवान्।

"राघवः कथं वञ्चनीयः" इति रामनाथः अहोरात्रं चिन्तयति स्म। गच्छन्, तिष्ठन्, उपविशन्, शयनं कुर्वन् सः तदेव चिन्तयति स्म।

"पञ्चविंशतिवर्षेभ्यः पूर्वं चन्दमामायां प्रकटिता कथा।"

अन्ते एकः उपायः तस्य मनसि स्फुरितः।

एकस्मिन् दिने राघवः एकाकी आपणे उपविष्टः आसीत्। तदा रामनाथः धावन् तत्र आगतवान्। राघवस्य समीपं गत्वा सः पृष्टवान्- "राघवमहोदय! दशभिः पञ्चसङ्ख्या गुणिता चेत् का सङ्ख्या लभ्यते?" इति।

"एषः रामनाथः सङ्कलनं गुणनं वा न जानाति। अतः एवं पृच्छति" इति चिन्तयन् राघवः उक्तवान् "पञ्चाशत्"

"भवतः बुद्धिः अस्ति वा? पञ्चाशत् कथम्? षष्टिः भवति किल?" इति उच्चस्वरेण उक्तवान् रामनाथः।

"पञ्चाशत्, षष्टिः" इति उभौ अपि उच्चस्वरेण पुनः पुनः उक्तवन्तौ। द्वयोः विवादं श्रुत्वा तत्र बहवः सम्मिलितवन्तः।

जनसमूहम् उद्दिश्य उच्चस्वरेण रामनाथः उक्तवान्- "भोः, सहोदराः! अत्र शृण्वन्तु। विमृश्य न्यायनिर्णयं कुर्वन्तु। एषः वराकः राघवः मम समीपतः दश रूप्यकाणि अधिकं स्वीकर्तुम् इच्छति। अहम् एतस्य समीपे षष्टि-रूप्यकाणि न्यासरूपेण स्थापितवान् आसम्। किन्तु इदानीं राघवः वदति पञ्चाशत् रूप्यकाणि एव इति। भवन्तः सज्जनाः मदीयं धनं समग्रं मां प्रापयन्तु" इति।

रामनाथस्य प्रतिपादनशैलीं दृष्ट्वा राघवः चकितः। तस्य मुखं विवर्णं जातम्। सः कोपेन उक्तवान्- "एषः रामनाथः कीदृशः दुष्टः! रे रामनाथ! भवान् कदा वा मम



समीपे धनं स्थापितवान् ? अयि भोः सज्जनाः ! एषः असत्यं वदति । कदापि एतेन मम समीपे धनं न निक्षिप्तम्'' इति ।

तदा रामनाथः राघवस्य वचनं तिरस्कुर्वन् उक्तवान्- ''भवतः अभिनयः अत्र मास्तु । एतावत्पर्यन्तम् पञ्चाशत्रूप्यकाणि अङ्गीकरोति स्म । इदानीं तदपि न इति वदति । रे, न्यूनातिन्यूनं पञ्चाशत्रूप्यकाणि वा ददातु । भवतः सकाशात् अहं युक्तं पाठं पठितवान् । इतः परं विस्मृत्य अपि भवतः समीपे धनं न स्थापयिष्यामि ।''

रामनाथस्य अभिनयः स्वरः च तावान् सहजः आसीत् येन सर्वे जनाः एतत् सत्यम् इत्येव चिन्तितवन्तः ।

सर्वे मिलित्वा राघवं तर्जयितुम् आरब्धवन्तः- ''प्रथमं तु भवान् पञ्चाशत्रूप्यकाणि दातुं सिद्धः आसीत् । एतत् तु अस्माभिः सर्वैः श्रुतम् । अस्माकं पुरतः एवं भवान् 'तावत् दातुम् अपि न शक्यते' इति उक्तवान् । सर्वस्वापहारः तु न उचितः । पञ्चाशत् स्वीकर्तुं रामनाथः सिद्धः अस्ति । अतः तावत् वा ददातु'' इति ।

''इतोऽपि विवादः क्रियते चेत्, षष्टिरूप्यकाणि दातव्यानि भवन्ति'' इति चिन्तया एव राघवः भीतः । सः मौनं पञ्चाशत् रूप्यकाणि आनीय रामनाथस्य हस्ते दत्तवान् ।

यदा धनं हस्ते आगतं, तदा रामनाथः उच्चैः हसितवान् । सर्वेषां पुरतः पञ्चविंशतिरूप्यकाणि राघवाय प्रत्यर्पयन् उक्तवान्— ''भवन्तं पाठयितुम् एव अहम् एवम् अभिनयं कृतवान् । एतानि पञ्चविंशतिरूप्यकाणि स्वीकरोतु । अवशिष्टं ऋणरूपेण दत्तम् इति लिखतु । अहं सर्वाणि रूप्यकाणि स्वीकर्तुं शक्नोमि स्म । किन्तु कदापि तथा न करोमि । अहं दरिद्रः स्याम् , न तु वञ्चकः'' इति ।

एतेन प्रसङ्गेन राघवः अतीव लज्जितः । जनाः रामनाथस्य चातुर्यं श्लाघमानाः हसन्तः च ततः निर्गतवन्तः ।






# विष्णुकथा

श्रीकृष्णः अर्जुनस्य रथं युद्धभूमिं नीत्वा द्वयोः सेनयोः मध्ये स्थापितवान् ।

अर्जुनः एकवारं शत्रुसेनाम् अवलोकितवान् । युद्धार्थं पितामहाः, पितृतुल्याः गुरुजनाः पूज्याः आचार्याः, बान्धवाः मित्राणि च सज्जीभूय उपस्थिताः सन्ति । एतान् सर्वान् दृष्ट्वा अर्जुनस्य मनः शिथिलम् अभवत् । सः चिन्तितवान् "राज्यार्थं किम् अहं प्रियजनानां वधं करोमि ? बान्धवानां रक्तैः लिप्तं राज्यं स्वीकृतं चेत् निश्चयेन नरकप्राप्तिः भविष्यति । एतादृशं राज्यं मम मास्तु । अहं राज्यार्थं कदापि युद्धं न करिष्यामि" इति ।

एवं चिन्तयन् अर्जुनः रथे उपविष्टवान् । हस्ततः धनुर्बाणादीनि पतितानि । तस्य मनः किङ्कर्तव्यतामूढतां गतम् ।

अकाले आपतिताम् अर्जुनस्य दुरवस्थां दृष्ट्वा श्रीकृष्णः उक्तवान्– "हे अर्जुन! युद्धक्षेत्रे अविवेकेन शस्त्रत्यागः, क्षत्रियकुलोत्पन्नस्य भवतः न उचितः । देशकालानुसारं स्वकर्तव्यपालनम् एव युक्तः धर्मः ।

वस्तुतः परमेश्वरः एव अद्वितीयः जगतः कर्ता । मनुष्याः केवलं निमित्तभूताः । अधर्मान्यायादीनां दूरीकरणपूर्वकं धर्मन्याययोः स्थापने मनुष्यः भगवतः साधनमात्रम् ।

लोके यदा यदा दुष्टाः प्रबलाः भवन्ति, यदा च सत्यस्य धर्मस्य च हानिः सम्भवति, तदा तदा दुष्टानां नाशनार्थं धर्मसंस्थापनार्थं च नारायणः प्रत्येकयुगे युगानुगुणम् अवतारं

"भगवद्गीता"



करोति । भगवतः अवतार‍रूपेण स्थितं मां स्मरतु । मां शरणं गच्छतु । मम आदेशम् अनुसरतु ।

भवान् श्रद्धया भवतः कर्तव्यम् आचरतु । फलविषये मा चिन्तयतु । उत्तमक्षत्रियेण यत् करणीयं तदेव करोतु भवान् । गाण्डीवं धनुः गृहित्वा पुनरपि युद्धार्थं सिद्धः भवतु'' इति ।

एतादृशम् उपदेशं श्रुत्वा अपि ''कृष्णः एव नारायणस्य अवताभूतः'' इत्येतस्मिन् विषये अर्जुनस्य सन्देहः एव आसीत् । कृष्णः अर्जुनस्य सन्देहं समूलं निवारयितुम् इच्छन् स्वकीयं विश्वरूपं धृतवान् ।

भगवतः विश्वरूपे अन्तर्गतं सृष्टि-स्थिति-लयादिकं सर्वम् युगपत् एव दृष्टवान् अर्जुनः । जगतः सृष्टौ, पालने, संहारे च एका एव प्रभु-लीला तेन दृष्टा । सर्वदेवताः विश्वरूपे समाविष्टाः आसन् ।

एतत् विश्वरूपं दृष्ट्वा अर्जुनस्य प्रक्षुब्धं मनः शान्तम् अभवत् । तस्य सन्देहाः निवृत्ताः, चिन्ताः परिहृताः । मनसि एकः एव भावः प्रतिध्वनति स्म– ''श्रीकृष्णः सर्वेषाम् इव मम अपि प्रेरकः । अहं तदधीनः कश्चित् सामान्यः ।''

इदानीम् अर्जुनस्य प्रतिकणेषु अपि स्फूर्तिः उद्भूता । सः उत्साहेन उत्थितवान् । गाण्डीवं सज्जीकृत्य, बाणान् हस्ते गृहीत्वा, शङ्खोद्घोषं कृतवान् ।

कौरव-पाण्डव-सेनयोः मध्ये घोरं युद्धं प्रवृत्तम् । अष्टादशदिनपर्यंतं युद्धं प्रचलितम् । अन्ते पाण्डवैः एव जयः प्राप्तः ।

पूर्वं शान्तिदूतरूपेण गतः श्रीकृष्णः यत् उक्तवान् आसीत् तत् सर्वं सत्यम् एव संवृत्तम् । भीमः स्वप्रतिज्ञां पूरितवान् । द्रौपदी पुनरपि विकीर्णानां केशानां बन्धनं कृतवती ।

अभिमन्युरूपेण स्थितः कालनेमिः वीरस्वर्गं प्राप्तवान् । कर्णरूपेण स्थितः सहस्रकवचस्य अंशः पुनरपि शिवस्य अन्तः प्रविष्टः । अर्जुन-कृष्णरूपेण स्थितयोः नरनारायणयोः अवतारः अपि समाप्तप्रायः आसीत् । कृष्णः भूदेव्याः कृते यत् वचनं दत्तवान् आसीत् तदनुसारं

भूदेव्याः उपरि स्थितः पापभारः निवारितः अभवत्।

दुर्योधनस्य मरणेन धृतराष्ट्रस्य मनः प्रक्षुब्धम् आसीत्। "पुत्रमरणस्य प्रतीकारः करणीयः" इति चिन्तयन् सः भीमं द्रष्टुम् इच्छां प्रकटितवान्। कृष्णः धृतराष्ट्रस्य हृदयभावं जानाति स्म। अतः सः भीमस्य लोहप्रतिमां निर्माप्य धृतराष्ट्रस्य पुरतः स्थापितवान्। धृतराष्ट्रस्य आलिङ्गनेन सा प्रतिमा चूर्णीभूता।

पुत्रशोकेन सन्तप्ता गान्धारी कृष्णम् उद्दिश्य शापं दत्तवती- "कौरवाणां वंशस्य इव यादवानां वंशस्य अपि सर्वनाशः शीघ्रम् एव भवतु" इति।

श्रीकृष्णः मन्दहासं प्रकटयन् उक्तवान्– "गान्धारि ! भवती पतिव्रता। भवत्याः वचनं कदाऽपि व्यर्थं न भविष्यति। विधिनिर्णयः एव भवत्याः मुखेन प्रकटितः अस्ति।"

पाण्डवानां वंशं निर्मूलयितुम् इच्छन् अश्वत्थामा उत्तरायाः गर्भे स्थितस्य शिशोः उपरि अपि अस्त्रप्रयोगं कृतवान् आसीत्। अतः उत्तरायाः गर्भतः शिशुः मृतः एव बहिः आगतः। श्रीकृष्णः तस्य शिशोः उपरि पादं स्थापयित्वा प्राणान् परीक्षितवान्, जीवदानं कृतवान् च। अतः तस्य शिशोः नाम 'परीक्षितः' इत्येव जातम्। एषः एव पाण्डववंशोद्धारकः सञ्जातः।



निद्रावस्थायां स्थितान् द्रौपद्याः पञ्चपुत्रान् अपि द्रोणाचार्यस्य पुत्रः अश्वत्थामा मारितवान्। अतः कुपितः अर्जुनः कृष्णः च द्रौपद्याः वचनानुसारं अश्वत्थामानं बद्ध्वा आनीय, द्रौपद्याः पुरतः स्थापितवन्तौ।

"नरकवाससदृशं जीवनम् एव भवतः कृते उचितः दण्डः। मृत्युना मोक्षः सिध्यति। अत. भवान् चिरञ्जीवी भूत्वा पीडाम् अनुभवतु" इति शापं दत्वा द्रौपदी तं प्रेषितवती।

श्रीकृष्णस्य वचनानुसारम् अर्जुनः अश्वत्थाम्नः शिरसि विद्यमानं मणिं निष्कासितवान्। एतेन अश्वत्थामा मानसिकरोगी सञ्जातः। सः मतिभ्रान्तः इव इतस्ततः अटितुम् आरब्धवान्।

शरशय्यायां शयितः इच्छामरणी भीष्मः



उत्तरायणस्य प्रतीक्षायाम् आसीत् । मृत्युशय्यायां एव भीष्मः युधिष्ठिरं राजधर्मम् उपदिष्टवान् । उत्तरायणे प्राप्ते सति, सः देहत्यागं कृतवान् । भीष्मस्य प्राणाः भवगति लीनाः जाताः ।

युधिष्ठिरस्य राज्याभिषेकः जातः । अश्वमेधयागस्य सिद्धता अपि विशेषतया प्रवृत्ता ।

श्रीकृष्णः यादवप्रमुखाः च यदा महाभारतयुद्धार्थं निर्गताः आसन्, तदा द्वारकायां समर्थः नायकः कोऽपि न आसीत् । अतः यादवाः सर्वे गर्वशालिनः स्वेच्छाचारिणः च सञ्जाताः । युद्धस्य आरम्भतः पूर्वम् एव बलरामः तीर्थयात्रार्थं निर्गतः आसीत् ।

कदाचित् महर्षिः विश्वामित्रः द्वारकाम् आगतवान् । उद्दण्डस्वभावाः यादवाः साम्बेन गर्भिणीवेषं धारितवन्तः । तं विश्वामित्रसमीपं नीत्वा परिहासेन पृष्टवन्तः– "मुनिवर ! एतस्याः गर्भतः पुत्रः जनिष्यति वा, उत पुत्री ? कृपया कथयतु" इति ।

असभ्यचेष्टया कुपितः विश्वामित्रः शापं दत्तवान्- "रे मूर्खाः दुष्टयादवाः ! एतस्य गर्भतः मुसलः उत्पद्यते । तस्य कारणतः समग्रः यदुवंशः समूलं नष्टः भविष्यति ।"

अनन्तरम् अपि यादवाः विश्वामित्रं उपहासेन बहु पीडितवन्तः । यदा साम्बः स्त्रीवेषं निष्कासितवान् तदा वस्तुतः एकः मुसलः उत्पन्नः आसीत् । एतत् दृष्ट्वा यादवाः सर्वे भीताः ।

युद्धं समाप्य श्रीकृष्णः द्वारकां प्रत्यागतवान् । तदा यादवाः कृष्णं सर्वं वृत्तान्तं निवेदितवन्तः । कृष्णः उक्तवान्- "मुसलं खण्डशः कृत्वा समुद्रे क्षिपन्तु" इति ।

एवं क्षिप्तम् एकं खण्डं कश्चन मीनः गिलितवान् । तं मीनं व्याधः गृहीतवान् । मीनस्य उदरे स्थितं तं मुसलभागं स्वबाणाग्रे नियोजितवान् । कालान्तरे तेन एव बाणेन कृष्णस्य देहान्त्यं सञ्जातम् ।

मुसलस्य अन्यकणाः तीरं प्राप्तवन्तः । तेभ्यः एव कुशनामकानि तृणानि तत्र समुत्पन्नानि ।

कानिचन वर्षाणि अतीतानि । एकदा यादवाः सर्वे विनोदविहारम् इच्छन्तः समुद्रतीरम् आगतवन्तः । तत्र यथेष्टं मदिरां पीत-

वन्तः ।

मदिरापानेन मत्ताः ते विवेकशून्याः सञ्जाताः । मत्ताः ते आत्मश्लाघनं कर्तुम् आरब्धवन्तः । एतन्निमित्तः परस्परविवादः ताडनपर्यन्तं प्रवृद्धः । विवेकरहिताः ते कुशतृणैः एव युद्धं कृतवन्तः । तेनैव सर्वे अपि मरणं प्राप्तवन्तः ।

एवं प्रकारेण मुनिशापः सत्यः सञ्जातः । मुसलः एव समग्रस्य यदुवंशस्य नाशम् अकरोत् ।

यदुवंशनाशस्य वार्ता श्रुत्वा बलरामः अतीव खिन्नः । संसारात् एव विरक्तः सः अरण्यं गत्वा समाधिस्थः जातः । योगबलेन शरीरं त्यक्त्वा पुनः अपि आदिशेषरूपेण वैकुण्ठं प्राप्तवान् ।

द्वारकानिर्माणार्थं समुद्रराजेन या भूमिः दत्ता आसीत् सा सप्तदिनेभ्यः पूर्वं कृष्णेन प्रत्यर्पणीया **आपतिता** । अतः श्रीकृष्णः अर्जुनाय वार्ता प्रेषितवान्– 'भवान् शीघ्रम् एव आगत्य द्वारकानगरे स्थितान् बालान्, वृद्धान्, स्त्रियः च इन्द्रप्रस्थं नयतु'' इति ।

अनन्तरं श्रीकृष्णः उद्धवं तत्त्वम् उपदिष्टवान् । तस्मै स्वकीयं वास्तविकं रूपं प्रदर्शितवान् च ।

यदुकुलं यदा समाप्तं तदा एव कृष्णावतारेण उद्दिष्टं सर्वं समाप्तम् आसीत् ।

अन्ते श्रीकृष्णः समुद्रतटस्य समीपे उप-



विश्य दिव्यं वेणुवादनं कृतवान् । नादमाधुर्येण प्रकृतिः पुलकिता । समुद्रः शान्तः । अनन्तरं श्रीकृष्णः एकस्य वृक्षस्य अधः, शिलायाः उपरि विश्रान्तिमुद्रायां स्थितवान् । दूरतः पश्यन् कश्चित् व्याधः कृष्णं हरिणं मन्यमानः बाणप्रयोगं कृतवान् ।

बाणः कृष्णस्य पादाङ्गुष्ठे लग्नः । बाणस्य अग्रभागे, मत्स्यस्य उदरात् प्राप्तः मुसलखण्डः योजितः आसीत् । यस्य मुसलस्य कारणतः यदुवंशस्य नाशः जातः तेनैव मुसलेन कृष्णस्यापि अन्त्यं जातम् ।

पूर्वं कदाचित् दूर्वासाः भ्रमन् द्वारकाम् आगतवान् आसीत् । सः कृष्णं पायसं प्रार्थितवान् । कारणान्तरेण कुपितः सः पायसं स्वशरीरे



लेपयितुम् आज्ञापितवान्। श्रीकृष्णः तस्य शरीरं पायसेन लेपितवान्। तदा प्रमादवशात् पादाङ्गुष्ठः एकः न लिप्तः आसीत्। तदा दुर्वासाः उक्तवान्– 'अङ्गुष्ठः एव भवतः मरणकारणं भविष्यति' इति।

बाणस्पर्शेन अङ्गुष्ठतः रक्तं स्रोतुम् आरब्धम्। व्याधः समीपम् आगत्य दृष्टवान्- श्रीकृष्णः वेदनया पीडाम् अनुभवति! एतत् दृष्ट्वा पश्चात्तापं प्रकटयन् व्याधः रोदितुम् आरब्धवान्।

तदा श्रीकृष्णः व्याधम् उक्तवान्- "भवान् मम विषये दुःखं न अनुभवतु। रामावतारसमये अहं वृक्षेषु निलीय वालिनं मारितवान्। तदा भवान् अङ्गदः आसीत्। अस्मिन् जन्मनि पूर्वकृतस्य फलं मया प्राप्तम्। कर्मफलं सर्वैः अनुभोक्तव्यम् एव। अतः भवान् चिन्तां न करोतु" इति।

एवं उक्त्वा श्रीकृष्णः व्याधाय स्वकीयं रामावतारं प्रदर्शितवान्। रामदर्शनेन व्याधः पूर्वजन्मस्मरणं प्राप्तवान्। भक्त्या परवशः सः तस्याम् एव स्थितौ शरीरत्यागं कृतवान्।

श्रीकृष्णस्य सारथिः स्वयजमानम् अन्विष्यन् तत्र आगतवान्। कृष्णस्य विकटपरिस्थितिं दृष्ट्वा सः विलपितुम् प्रवृत्तः। तदा कृष्णः तं सान्त्वयित्वा उक्तवान्- "भवान् शीघ्रं द्वारकां गत्वा सर्वान् यादवान् 'नगरं त्यक्तव्यम्' इति वदतु। "यादवस्त्रियः सर्वाः नेतव्याः" इति अर्जुनं स्मारयतु। उद्धवम् अक्रूरं च मम आशीर्वादान् निवेदयतु" इति।

सारथिः अश्रूणि विमुञ्चन् हृदयेन दुःखं वहन् ततः निर्गतः।

श्रीकृष्णः पुनः एकवारं वेणुनादं कृतवान्। गानमाधुर्यं तत्र सर्वत्र व्याप्तम्। श्रीकृष्णः स्वकीयां दैहिकलीलां समापितवान्। विष्णुरूपेण वैकुण्ठे शेषशय्याम् अधिरूढवान्।

श्रीकृष्णस्य मरणसमनन्तरम् एव सागरः उपरि आगतः। समग्रः द्वारकाप्रदेशः जले विलीनः अभवत्। एतदनन्तरं 'कलियुगम्' इति नवीनं युगम् आरब्धम्।

कृष्णस्य मरणानन्तरम् उद्धवः सर्वत्र गत्वा

कृष्णतत्वानां प्रसारं कृतवान्।

विष्णोः अवतारभूतः श्रीकृष्णः स्वलीलया सर्वान् बोधयितुम् एव अवतारं प्राप्तवान् आसीत्। तेन सर्वेषु मानवेषु ईश्वरभक्तेः उद्बोधनं कृतम्।

दुष्टशिक्षणं, शिष्टपरिपालनम् एतत् द्वयम् अपि अवतारस्य उद्देशः आसीत्। तच्च साधितं कृष्णेन।

तथैव लोके एकः नवीनः आदर्शः अपि स्थापितः यत् कृष्णः उन्नतान् विचारान् स्वकीये आचरणे प्रदर्श्य, सर्वेषां मार्गदर्शकः अभवत्।

कृष्णः मानवरूपधारी चेदपि मानवीयकामनाभिः मुक्तः आसीत्। मानवीयसीमाम् अतिक्रान्तः आसीत्। तेन यद्यत् कृतं तत् सर्वं कर्म निष्कामम् आसीत्। फलस्य आशा तेन कदापि न कृता।

तस्य निर्गमनानन्तरं अत्र कलियुगस्य प्रवेशः जातः। कलियुगे पापस्य प्रभावः अत्यधिकः। तपःशक्तिः सर्वथा क्षीणा। अतः एव मनुष्याणां मुक्तये साधनरूपेण भक्तिबीजानि लोके आरोपितानि।

कृष्णेन अनुगृहीतः एकः अमूल्यः ग्रन्थः "भगवद्गीता"। आकारेण अल्पः चेदपि एषः ग्रन्थः अपारं तत्वं सरलतया प्रतिपादयति। कृष्णार्जुनयोः संवादरूपेण लिखितः एषः ग्रन्थः समग्रे प्रपञ्चे पूज्यते। सार्वकालिकं तत्वम् अत्र प्रतिपादितम् अस्ति।

मोक्षप्रतिपादकः एषः ग्रन्थः दैनन्दिनजीवतस्य अपि मार्गदर्शकः। अतः इदानीम् अपि आबालवृद्धाः, गृहस्थाः सन्यासिनः, मुमुक्षवः सर्वे अपि प्रेरणां प्राप्नुवन्ति। वेदवेदान्तानां रहस्यं सर्वम् अत्र निहितम् अस्ति।

सर्वोपनिषदः गावः
दोग्धा गोपालनन्दनः।
पार्थः वत्सः सुधीः भोक्ता
दुग्धं गीतामृतं महत्॥





# राजाज्ञा फलकारिणी

कदाचित् बस्राराज्यस्य राजधान्यां महत् चौर्यं प्रवृत्तम्। अत्यमूल्यानि वज्रवैडूर्याणि चोरितानि। तेन एव सह महाराजस्य प्रियतरं रत्नखचितं खड्गम् अपि चोरितम्।

एषा वार्ता अल्पे एव काले समग्रे नगरे व्याप्ता। सर्वेषां मुखे अपि एषा एव वार्ता।

राजा तु एतद्विषये बहु कुपितः। सः कोपेन गर्जितवान्- "राजधान्यां चौर्यं प्रवृत्तम् इत्यस्य अर्थः- अधिकारिणः अजागरूकाः, राजा च अप्रयोजकः इति। चोरः राजधानीम् एव प्रविश्य विना कष्टं चौर्यं करोति चेत् राज्ये का वा परिस्थितिः स्यात्?"

सर्वान् रक्षकाधिकारिणः आहूय सः कठोरस्वरेण तर्जितवान्– "अद्य रात्रितः पूर्वं चोराः चोरितवस्तुभिः सह आनेतव्याः। नो चेत्, भवतां सर्वेषां मरणदण्डनं भविष्यति।

'चोरम् अन्विष्यतु' इति उक्ते भवन्तः किं कुर्वन्ति इति अहं जानामि। श्रमं सोढुम् असमर्थाः भवन्तः कञ्चित् भिक्षुकं दरिद्रं वा गृहीत्वा आनयन्ति। भवतां ताडनेन भीतः सः चौर्यम् अङ्गीकरोति। एतत् न भवेत्। अतः अहं वदन् अस्मि यत् चोरितवस्तुभिः सह चोरः अत्र आनेतव्यः इति। गच्छन्तु इदानीम्। यथाकथञ्चित् चोरम् अन्विष्य आनयन्तु" इति।

महाराजस्य आज्ञां श्रुत्वा सर्वे अधिकारिणः भीताः। कस्य वा प्राणाः न प्रियतमाः? अतः सर्वे निश्चितवन्तः– "येन केनापि उपायेन चोरः ग्रहीतव्यः एव" इति।

रक्षणप्रमुखः सर्वान् सहाधिकारिणः आहूय विविधसूचनाः दत्त्वा प्रेषितवान्। सर्वे वेषान्तरं धृत्वा नगरस्य भिन्नभिन्नभागेषु अन्वेषणम् आरब्धवन्तः।

"सायङ्काले नगरस्य दक्षिणदिशायां प्रधानोद्यानस्य द्वारस्य समीपे सर्वैः मेलितव्यम्" इति

सूचना आसीत् ।

रहमतनामकः कश्चित् अधिकारी भिक्षुकवेषं धृतवान् । नगरस्य उत्तरपार्श्वे मध्याहपर्यन्तं सञ्चारं कृतवान् । दीर्घसञ्चारेण सः अतीव श्रान्तः आसीत् । तीव्रतरा पिपासा तं बाधते स्म ।

तत्र एकम् उद्यानम् आसीत् । मध्ये लघुसरोवरः अपि आसीत् । रहमतः तत्र गत्वा जलं पातुम् आरब्धवान् ।

जलपानम् अर्धं यदा समाप्तम् तदा उद्यानपालकः आगत्य तस्य गलं गृहीतवान् । द्वित्रवारं मुष्टिप्रहारं कृत्वा सः उक्तवान्– "रे वराक ! चोरः इव कथम् अत्र प्रविष्टः ? कस्य अनुमतिः स्वीकृता ? कुप्रसिद्धाः चोराः एषु दिनेषु भिक्षुकवेषं धृत्वा नगरे सञ्चरन्ति । भवान् अपि कश्चित् चोरः एव" इति ।

रहमतः यद्यपि उच्चः अधिकारी । किन्तु इदानीं सः वेषान्तरं धृत्वा आगतः अस्ति । यदि अधिकारदर्पः प्रदर्श्यते तर्हि रहस्यं प्रकटितं भविष्यति ।

अतः सः दैन्यं प्रकटयन् उद्यानपालकं प्रार्थितवान्– अहं चोरः वा लुण्टाकः वा न । कश्चित् भिक्षुकः अस्मि अहम् । पिपासया मरणावस्थाम् आपन्नः अहम अत्र आगत्य किञ्चित् जलं पीतवान् । महोदय ! शान्तः भवतु । मां न ताडयतु" इति ।

"अहो ! एवं वा ?" इति काक्वा वदन् सः उद्यानरक्षकः पुनः अपि मुष्टिप्रहारान् अनु-



गृहीतवान् ।

रक्षणाधिकारी प्रहारान् अपमानं च मौनं सोढवान् ।

एतेन उत्साहितः उद्यानपालकः पुनः अपि अधिकं ताडितवान् । यदा ताडनं सोढुं न शक्तं तदा रहमतः किञ्चिदिव उच्चस्वरेण उक्तवान्— मां किमर्थम् एवं ताडयति ? मया कः अपराधः कृतः ? जलपानम् अपि अपराधाय भवति वा ? मां ताडयितुं भवतः कः अधिकारः ? यदि मां चौरं चिन्तयति भवान्, तर्हि रक्षकभटसमीपं नयतु । सत्यासत्यनिर्णयं कृत्वा ते एव उचितं दण्डयन्ति किल ?'' इति ।

एतेन वचनेन उद्यानपालकस्य कोपः अधिकः जातः । 'माम् एव न्यायनियमान् शिक्षयति वा ?' इति वदन् सः ताडयन् एव रहमतम् उद्यानतः बहिः निष्कासितवान् ।

अनन्तरं भिक्षुकवेषधारी सः रक्षणाधिकारी अन्यत्र अपि चोरस्य अन्वेषणं कृत्वा सायङ्काले पूर्वनिश्चितं स्थानं प्राप्तवान् । अन्ये अधिकारिणः अपि एकशः स्वस्थानं प्राप्तवन्तः। भिक्षकवेषधारिणः परिस्थितिं दृष्ट्वा सर्वे अनुकम्पं प्रदर्शितवन्तः ।

रहमतः यदा समग्रं वृत्तान्तं निवेदितवान् तदा सर्वे कोपाविष्टाः जाताः । ते सर्वे उद्यानपालकं दण्डयितुं निर्णयं कृतवन्तः । अतः झटिति उद्योगोचितं वेषं धृत्वा तत् उद्यानं प्रति प्रस्थितवन्तः ।

उद्यानपालकः दशवर्षीयेण बालकेन सह



किमपि रहस्यवार्तालापं कुर्वन् आसीत्। तदा एव तत्र आगता:सर्वे अधिकारिणः युगपत् एव तयोः उपरि आपतितवन्तः।

अकस्मात् प्रवृत्तेन आक्रमणेन उद्यानपालकः चकितः भीतः च। "किमर्थम् एवं क्रियते एतैः ?" इति सः न ज्ञातवान्।

दशवर्षीयः पुत्रः एतत् सर्वं पश्यन् आसीत्। स्वपितुः उपरि रक्षकाधिकारिणां युगपत् आक्रमणं दृष्ट्वा भीतः सः उच्चैः रुदन् उक्तवान्- "भोः, भोः! मम पितरं न मारन्तु। तेन चौर्यं कृत्वा यानि वस्तूनि आनीय रहस्ये स्थापितानि, तानि अहं प्रदर्शयामि" इति।

बालकस्य एतत् वचनं श्रुत्वा अधिकारिणः आश्चर्यचकिताः।

"कुत्र सन्ति तानि वस्तूनि ? शीघ्रं प्रदर्शयतु" इति वदन् रक्षकाधिकारिणां प्रमुखः बालकम् अपि एकवारं ताडितवान्।

रुदन् बालकः अधिकारिणः उद्यानस्य कोणे एकस्य गुल्मस्य समीपं नीतवान्। तत्र यदा खननं कृतं तदा सर्वाणि वस्तूनि लब्धानि। एतेन अधिकारिणः सर्वे बहु सन्तुष्टाः।

रहमतः उद्यानरक्षकं तर्जयन् उक्तवान्- "यदि भवान् **मध्याह्ने** पिपासितं भिक्षुकं न मारयति, तर्हि भवतः चौर्यम् अपि प्रकटितं न भवेत् एव। प्रायः केनापि पिशाचेन बाधितः भवान् राजधान्यां चौर्यं कृतवान्। सः एव पिशाचः भिक्षुकं ताडयितुं भवन्तं प्रेरितवान्" इति।

एतेन वचनेन उद्यानपालकः ज्ञातवान्- "मध्याह्ने एषः एव अधिकारी भिक्षुकरूपेण आगतवान् आसीत्" इति।

अधिकारिणः चोरितवस्तुभिः सह चोरं महाराजस्य पुरतः नीत्वा स्थापितवन्तः। महाराजः रहमतविषये सन्तुष्टः जातः। रहमतं उपायनादिभिः सत्कृत्य उच्चपदे नियोजितवान्।



# मूर्खौ वणिजौ

अनूपनगरे एकः उदारः भूस्वामी आसीत् । वाणिज्यार्थं मूलधनं ये इच्छन्ति तादृशानां कृते सः साहाय्यं करोति स्म । साहाय्यं सम्प्रार्थ्य आगतानां बुद्धिपरीक्षां कृत्वा सः धनं ददाति स्म ।

एकदा कुक्कुटाण्डानां वाणिज्यं कर्तुम् इच्छन्तौ मन्देशः मूर्खेशः च भूस्वामिसमीपम् आगतवन्तौ ।

तदा भूस्वमी पृष्टवान्– "कुक्कुटाण्डानां विषये आज्ञातः विषयः यदि कोऽपि अस्ति, उच्यताम्" इति ।

तदा मन्देशः उक्तवान्– "प्रकाशं वायुं च विना कुक्कुटशावकाः कथम् अण्डे बहुकालं निवसन्ति इति अहं न जानामि" इति ।

तदा मूर्खेशः उक्तवान्– "इतोऽपि आश्चर्यकरः विषयः अन्यः अस्ति । शावकः बहिः आगतमनसमये अण्डं भित्वा आगच्छति किल ? किन्तु प्रवेशसमये अण्डम् अभित्वा सः कथं प्रविशति ?" इति ।

तदा भूस्वामी हसन्– "अण्डानां वाणिज्ये साफल्यं प्राप्तुं भवन्तौ असमर्थौ । अतः अन्यवाणिज्यं किमपि चिन्तयन्तु" इति उक्त्वा तौ प्रेषितवान् ।



# चित्रशीर्षिका-स्पर्धा  पारितोषिकं ५०/- रूप्यकाणि।

**विजितां शीर्षिकां नवम्बर-८४ मासे प्रकटयिष्यामः।**



P.R. Herle



S.B. Prasad

※उपरितनं चित्रद्वयं पश्यन्तु। तस्य युक्तां शीर्षिकां परस्पर-सम्बन्धि-वाक्यद्वयेन लिखित्वा अक्टोबर-२० दिनाङ्कतः पूर्वम् एव प्रेषयन्तु। अनन्तरम् आगताः शीर्षिकाः न परिशीलयिष्यामः। स्पर्धायां विजेता ५०/- रूप्यकात्मकं पारितोषिकं प्राप्नोति। ※ शीर्षिकाः समपत्रे (पोस्ट्-कार्ड्) लेखनीयाः। तत्र अन्यः विषयः न लेखनीयः। ※अधोनिर्दिष्ट-सङ्केतस्य कृते शीर्षिकाः प्रेषणीयाः-

चन्दमामा (संस्कृतम्)
७३/२ 'अक्षरम्', रङ्गारावमार्गः, शङ्करपुरम्, बेङ्गालूरु-५६०००४

---

**'आगस्ट्' मासस्य चित्रशीर्षिकास्पर्धायाः परिणामः —**

प्रथमचित्रम्- हासः सुमनसि।
द्वितीयचित्रम्- सुमनाः वाससि।

प्रेषकः- ईशः ८/४३३, गान्धिरोड्, प्रोद्दुटूरु, कडपजिल्ला, आ.प्र-५१६ ३६०

**भवन्तः जानन्ति वा ? ( उत्तराणि )**

१. सन्त थामस्। २. जैनधर्मः। ३. नलन्दा। ४. जेन्द अवेस्ता। ५. सिसिरो।

Printed by B. V. REDDI at Prasad Process Private Ltd., and Published by B. VISWANATHA REDDI for CHANDAMAMA CHILDREN'S TRUST FUND (Prop. of Chandamama Publications) 188, . Arcot Road, Madras-600 026 (India). Controlling Editor: NAGI REDDI.

# कठिनशब्दानां सान्दर्भिकाः अर्थाः

| | |
|---|---|
| वणिक् | Merchant |
| वस्तुस्थितिः | Fact |
| पिहितम् | Covered |
| स्कन्धः | Shoulder |
| गृध्रः | Vulture |
| विस्फोटः | Explosion |
| उध्वस्तः | Destroyed |
| विस्फोटकम् | Bomb |
| कवाटः | Shutter |
| पादाघातः | Stamping of the foot |
| सद्योजातः | Just formed |
| यच्छन् | Giving |
| आतपः | Sun shine |
| अनुरोधः | Compulsion |
| कुल्या | Channel |
| पितृव्यः | Uncle |
| धूमपानम् | Smoking |
| भीरुः | Coward |
| वार्धक्यम् | Old age |
| कुद्दालः | Shade |
| निगूहितुम् | To conceal |
| खातुम् | To dig |
| श्वशुरः | Father-in-Law |
| सज्जीकृत्य | Having set up |
| मेदः | Fat |
| ऊर्णवस्त्रम् | Woollen cloth |
| स्वेदः | Sweat |
| मुसलः | Pestle |
| व्याधः | Hunter |
| स्रोतुम् | Ooze |
| पिपासा | Thirst |
| काक्वा | Sarcastically |
| युगपत् | At a time |
| कपोतः | Dove |
| कुसीदव्यवहारः | Money lending |
| वृद्धिः | Interest |
| मूलधनम् | Capital |
| शावकः | Chicks |
| कुक्कुटाण्डः | Egg |
| अभित्वा | Without breaking |

# आपणव्यवहारः- Shopping

| | |
|---|---|
| ग्राहिका- तण्डुलस्य मूल्यं कियत् ? | How much is rice |
| आपणिकः- किलो कृते चत्वारिरूप्यकाणि, विंशतिपैसाः | Rs 4-20 a kg |
| ग्रा- तण्डुलः स्वच्छीकृतः किल? | Is it the clean variety? |
| आ- पश्यतु भवती, एकः अपि अवकरः न दृश्यते, कियत् ददामि ? | You can see, there are no impurities at all. What quantity you need? |
| ग्रा- पञ्चकिलो ददातु। | Let me have 5 kgs. |
| आ- स्यूतः आनीतः वा ? | You have a bag with you? |
| ग्रा- आम् अत्र स्थापयतु। | Yes, put it in here. |
| आ- अन्यत् किं ददामि ? | Anything else? |
| ग्रा- शुद्धः नवनीतः अस्ति वा ? | You have good quality butter? |
| आ- आम्, किलो कृते ३६ रूप्यकाणि। | We have. It is Rs 36 a kg. |
| ग्रा- किम् ? ३६ रूप्यकाणि वा ? गतसप्ताहे न्यूनम् आसीत्। | What! Rs 36 a kg? It was less last week. |
| आ- किं कुर्मः, अम्ब ! मूल्यंतु दिने दिने वर्धते। अस्तु, भवत्याः कृते इति ३५ रूप्यकाणि स्वीकरोमि। एककिलो ददामि वा ? | Yes, Madam, what to do? Prices go up every day. But, well, I can give you for Rs 35. Shall I give one kg? |
| ग्रा- ३४ रूप्यकाणि स्वीकरोतु, एककिलो ददातु। | Make it Rs 34 and give a kg. |
| आ- न शक्यते, अम्ब ! | I am sorry Madam. It is impossible. |
| ग्रा- अहं सर्वदा भवतः आपणतः एव वस्तूनि स्वीकरोमि किल ? ३४ रूप्यकाणि स्वीकरोतु। पुनः विवादः मास्तु। | Don't you see. I always shop with you. Take Rs 34. Let us not bargain any more. |
| आ- अस्तु किम् अन्यत् ? | Okey, anything more? |
| ग्रा- एकं सुफेनकं ददातु ! आहत्य कियत् दातव्यम् इति वदतु। | Give me a Detergent Cake and let me know the amount. |